## योनेः शरीरम् । २७

अथ रेतःसिग्भावस्यानन्तरं योनौ निषिक्ते रेतसि योनेरधिशरीरमनुशयिनामनुशयफलोपभोगाय जायत इत्याह शास्त्रम् ' य इह रमणीयचरणाः' ( छा० ५।१०।७ ) इत्यादि । तस्मादप्यवगम्यते नावरोहे व्रीह्यादिभावावसरे तच्छरीरमेव सुखदुःखान्वितं भवतीति । तस्माद्व्रीह्यादिसंश्लेषमात्रमनुशयिनां तज्जन्मेति सिद्धम् ॥ २ ॥ इति श्रीगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवत्पूज्यपाद तौ शारीरकमीमांसाभाष्ये तृतीयाध्यायस्य प्रथमः पादः ॥ १ ॥

---

# तृतीयाध्य ये द्वितीय पादः

[ अ ादे त्वंपदार्थपरिशोधनविचारः ]

### १ संध्याधिकरणम् सू–१–६

## संध्ये सृष्टिराह हि १ ॥

अतिक्रान्ते पादे पञ्चाग्निविद्यामुदाहृत्य जीवस्य संसारगतिप्रभेदः प्रपञ्चितः । इदानीं तु तस्यै ावस्थाभेदः प्रपञ्च्यते । इदमामनन्ति 'स यत्र प्रस्वपिति' ( बृ० ४।३।९ ) इत्युपक्र य 'न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान्रथयोगान्पथः सृज े' ( बृ० ४।३।१० ) इत्यादि । तत्र संशयः किं प्रबोध इव स्वप्नेऽपि पारमार्थिकी सृष्टिराहोस्विन्मायामयीति । तत्र तावत्प्रतिपद्यते संध्ये तथ्यरूपा सृष्टिरिति । संध्यमिति स्वप्नस्थानमाचष्टे, वेदे प्रयोगदर्शनात् 'संध्यं तृतीयं स्वप्न ानम्' ( बृ० ४।३।९ ) इति । द्वयोर्लोकस्थानयोः प्रबोध प्रसादस्थानयो ि संधौ भवतीति संध्यम् । तस्मिन्संध्ये स्थाने तथ्यरूपैव ष्टिर्भवि हेति । कुतः—यतः प्रमाणभूता श्रुतिरेवमाह 'अथ रथान्रथयोगान्पथः सृज े' ( बृ०४।३।१०) इत्यादि । स हि क ेति चोपसंहारादेवमेवावग यते ॥१॥

## निर्मातारं चैके पु द २

अपिचैके शाखिनोऽस्मिन्नेव संध्ये स्थाने कामानां निर्मातारमात्मा-

नमामनन्ति 'य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः' (क० ५।८) इति । पुत्रादयश्च तत्र कामा अभिप्रेयन्ते काम्यन्त इति । ननु कामशब्देनेच्छाविशेषा एवोच्येरन् । न । 'शतायुषः पुत्रपौत्रान्वृणीष्व' (क० १।२३ ) इति प्रकृत्यान्ते 'कामानां त्वा कामभाजं करोमि' (क० १।२४) इति प्रकृतेषु तत्र तत्र पुत्रादिषु कामशब्दस्य प्रयुक्तत्वात् । प्रा चैनं निर्मातारं प्रकरणवाक्यशेषाभ्यां प्रतीमः । प्राज्ञस्य हीदं करणम् 'अन्यत्र धर्मादन्यत्राधर्मात्' ( क० २।१४ ) इत्यादि, तद्विषय एव च वाक्यशेषोऽपि 'तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते । तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन' (क० ५।८) इति । प्राज्ञकर्तृका च सृष्टिस्तथ्यरूपा समधिगता जागरिताश्रया तथा स्वप्नाश्रयापि सृष्टिर्भवितुमर्हति । तथाच श्रुतिः 'अथो खल्वाहुर्जागरितदेश एवास्यैष इति यानि व जाग्रत्पश्यति तानि सुप्तः' ( बृ० ४।३।१४ ) इति स्वप्नजागरितयोः समानन्यायतां श्रावयति । तस्मात्तथ्यरूपैव संध्ये सृष्टिरिति ॥ २ ॥

एवं प्राप्ते प्रत्याह

**माया त्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ३ ।**

तुशब्दः पक्षं व्यावर्तयति । नैतदस्ति यदुक्तं संध्ये सृष्टिः पारमार्थिकीति । मायैव संध्ये सृष्टिर्न परमार्थगन्धोऽप्यस्ति । कुतः कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् । नहि कार्त्स्न्येन परमार्थवस्तुधर्मेणाभिव्यक्तस्वरूपः स्व : । किं पुनरत्र कार्त्स्न्यमभिप्रेतं देशकालनिमित्तसंपत्तिरबाधश्च । नहि परमार्थवस्तुविषयाणि देशकालनिमित्तान्यबाधश्च स्वप्ने संभाव्यन्ते । न तावत्स्व रथादीनामुचितो देशः संभवति । नहि संवृते देहदेशे रथादयोऽवकाशं लभेरन् । स्यादेतत् । बहिर्देहात्स्वप्नम् द्रक्ष्यति देशान्तरितद्रव्यग्रहणात् । दर्शयति च श्रुतिर्बहिर्देहात्स्वप्नम्—'बहिष्कुलायादमृतश्चरित्वा । स ईयतेऽमृतो यत्र कामम्' (बृ० ४।३।१२ ) इति स्थितिगतिप्रत्ययभेदश्च नानिष्क्रान्ते जन्तौ सामञ्जस्यमञ्जुवीतेति । नेत्युच्यते । नहि सु स्य जन्तोः क्षणमात्रेण योजनशतान्तरितं देशं पर्येतुं विपर्येतुं च

१ संवृते कीर्णे । २ पर्येतुं गन्तुम् । विपर्ये आगन म् ।

ततः सामर्थ्यं संभाव्यते। चिच्च प्रत्यागमनवर्जितं स्व श्रावयति रु व-हमद्य शयानो निद्रयाऽभिप्लु : स्व पञ्चालानभिगतश्चास्मिन तिबु श्चेति। देहा दपेयात्पञ्चाले प्रतिबुध्येन तानसावभिगत इति रुष्वेव तु प्रतिबुध्यते। येन चायं देहेन देशान्तरमश्नुवानो न्यते तमन्ये पार्श्वस्थाः शयनदेश एव पश्यन्ति। यथाभूतानि चायं देशान्तराणि स्व पश्यति न तानि तथाभूतान्ये भ न्ति। परिधावंश्चेत्पश्येज्जाग्रद्व स्तुभूतमर्थमा-कलयेत्। दर्शयति च श्रुतिरन्तरेव देहे स्वप्नम्- 'यत्रैतत्स्वप्नयया चरति' इत्युपक्र य 'स्वे शरीरे यथाकामं परिवर्तते' (बृ० २।१।१८) इति। अतश्च श्रुत्युपपत्तिविरोधाद्बहिष लायश्रुतिर्गौणी व्याख्यातव्या बहिरिव लायादमृ श्चरित्वेति। यो हि वसन्नपि शरीरे न तेन प्रयोजनं रोति स बहिरिव शरीराद्भवतीति। स्थितिगतिप्रत्ययभेदोऽप्येवं ति विप्रलम्भ एवाभ्युपगन्तव्यः। कालविसंवादोऽपि च स्वप्ने भवति रजन्यां सुप्तो वासरं भारते वर्षे मन्यते। तथा मुहूर्तमात्रवर्तिनि स्वप्ने कदाचिद्ब-हुवर्षपूगानतिवाहयति। निमित्तान्यपि च स्व न बुद्धये कर्मणे वोचितानि विद्यन्ते। करणोसंहाराद्धि नास्य रथादिग्रहणाय चक्षुरादीनि सन्ति। रथादिनिर्वर्तनेऽपि कुतोऽस्य निमेषमात्रेण सामर्थ्यं दारूणि वा। बाध्यन्ते चैते रथादयः स्वप्नदृ ाः प्रबोधे। एव चै सुलभबाधा भवन्ति। आद्यन्तयोर्व्यभिचारदर्शनात्। रथोऽयमिति हि कदाचित्स्वप्ने निर्धारितः क्षणेन मनुष्यः संपद्यते मनुष्योऽयमिति निर्धारितः क्षणेन वृक्षः। स्पष्टं चाभावं रथादीनां स्व श्रावयति शास्त्रम्- 'न तत्र रथा न रथयोगा न पन्थानो भवन्ति' (बृ०४।३।१) इत्यादि। तस्मान्माया-मात्रं स्वप्नदर्शनम्॥ ३ ॥

## सूच हि श्रुतेराचक्ष च तद्विदः ४

मायामात्रत्वात्तर्हि न कश्चित्स्वप्ने परमार्थगन्धोऽस्तीति। नेत्युच्यते। सूचकश्च हि स्वप्नो भवति भविष्यतोः साध्वसाधुनोः। तथाहि श्रूयते 'यदा कर्मसु काम्येषु स्त्रियं स्वप्ने पश्यति। मृद्धिं तत्र जानीयात्त-

स्मिन्स्वप्ननिदर्शने' ( छा० ५।२।९ ) तथा पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ति' इत्येवमादिभिः स्वप्नैरचिरजीवित्वमावेद्यत इति श्रावयति । आचक्षते च स्वप्नाध्यायविदः 'कुञ्जरारोहणादीनि स्वप्ने धन्यानि खरयानादीन्यधन्यानि' इति । मन्त्रदेवताद्रव्यविशेषनिमित्ताश्च केचित्स्वप्नाः सत्यार्थगन्धिनो भवन्तीति मन्यन्ते । तत्रापि भवतु नाम सूच्यमानस्य वस्तुनः सत्यत्वं, सूचकस्य तु स्त्रीदर्शनादेर्भवत्येव वैतथ्यं बाध्यमानत्वादित्यभिप्रायः । तस्मादुपपन्नं स्वप्नस्य मायामात्रत्वम् । यदुक्तम् 'आह हि' इति तदेवं सति भाक्तं व्याख्यातव्यम् यथा लाङ्गलं गवादीनुद्वहतीति निमित्तमात्रत्वादेवमुच्यते, नतु प्रत्यक्षमेव लाङ्गलं गवादीनुद्वहति । एवं निमित्तमात्रत्वात्सुप्तो रथादीन्सृजते स हि कर्तेति चोच्यते, नतु प्रत्यक्षमेव सुप्तो रथादीन्सृजति । निमित्तत्वं त्वस्य रथादिप्रतिभाननिमित्तमोदत्रासादिदर्शनात्तन्निमित्तभूतयोः सुकृतदुष्कृतयोः कर्तृत्वेनेति वक्तव्यम् । अपिच जागरिते विषयेन्द्रियसंयोगादादित्यादिज्योतिर्व्यतिकरा त्मनः स्वयंज्योतिष्ट्वं दुर्विवेचनमिति तद्विवेचनाय स्वप्न उपन्यस्तः । तत्र यदि रथादिसृष्टिवचनं श्रुत्या नीयेत तदा स्वयंज्योतिष्ट्वं न निर्णीतं स्यात् । तस्माद्रथाद्यभाववचनं श्रुत्या रथादिसृष्टिवचनं तु भक्त्येति व्याख्येयम् । एतेन निर्माणश्रवणं व्याख्यातम् । यदप्युक्तम् 'प्राज्ञमेनं निर्मातारमामनन्ति' इति । तदप्यसत् । श्रुत्यन्तरे 'स्वयं विहत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपिति' ( बृ० ४।३।९ ) इति जीवव्यापारश्रवणात् । इहापि 'य एष सुप्तेषु जागर्ति' (क ५।८) इति प्रसिद्धानुवादाज्जीव एवायं कामानां निर्माता संकीर्त्यते । तस्य तु वाक्यशेषेण तदेव शुक्रं तद्ब्रह्मेति जीवभावं व्यावर्त्य ब्रह्मभाव उपदिश्यते— 'तत्त्वमसि' ( छा० ६।९।४ ) इत्यादिवदिति न ब्रह्मप्रकरणं विरुध्यते । नचास्माभिः स्वप्नेऽपि प्राज्ञव्यवहारः प्रतिषिध्यते । तस्य सर्वेश्वरत्वात्सर्वास्ववस्थास्वधिष्ठातृत्वोपपत्तेः । पारमार्थिकस्तु नायं संध्याश्रयः सर्गो वियदादिसर्गवदित्येतावत्प्रतिपाद्यते । नच वियदादिसर्गस्याप्यात्यन्तिकं सत्यत्वमस्ति । तिपादितं हि 'तदनन्यत्वमारम्भणशब्दादिभ्यः' (ब्र०

सू० २।१।१४ ) इत्यत्र समस्तस्य प्रपञ्चस्य मायामात्रत्वम् । प्राक्तु ब्रह्मात्मत्वदर्शनाद्वियदादिप्रपञ्चो व्यवस्थितरूपो भवति। संध्याश्रयस्तु प्रपञ्चः प्रतिदिनं बाध्यत इति। अतो वैशेषिकमिदं संध्यस्य मायामात्रत्वमुदितम्॥४॥

**पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॥ ५ ॥**

अथापि स्यात्परस्यैव तावदात्मनोंऽशो जीवोऽग्नेरिव विस्फुलिङ्गः। तत्रैवं सति यथाग्निविस्फुलिङ्गयोः समाने दहनप्रकाशनशक्ती भवत एवं जीवेश्वरयोरपि ज्ञानैश्वर्यशक्ती, ततश्च जीवस्य ज्ञानैश्वर्यवशात्सांकल्पिकी स्वप्ने रथादिसृष्टिर्भविष्यतीति । अत्रोच्यते—सत्यपि जीवेश्वरयोरंशांशिभावे प्रत्यक्षमेव जीवस्येश्वरविपरीतधर्मत्वम् । किं पुनर्जीवस्येश्वरसमानधर्मत्वं नास्त्येव । न नास्त्येव । विद्यमानमपि तत्तिरोहितमविद्यादिव्यवधानात् । तत्पुनस्तिरोहितं सत्परमेश्वरमभिध्यायतो यतमानस्य जन्तोर्विधूतध्वान्तस्य तिमिरतिरस्कृतेव दृक्शक्तिरौषधवीर्यादीश्वरप्रसादात्संसिद्धस्य कस्यचिदेवाविर्भवति न स्वभावत एव सर्वेषां जन्तूनाम् । कुतः—ततो हीश्वराद्धेतोरस्य जीवस्य बन्धमोक्षौ भवतः । ईश्वरस्वरूपापरिज्ञानाद्बन्धस्तत्स्वरूपपरिज्ञानात्तु मोक्षः । तथाच श्रुतिः—'ज्ञात्वा देवं सर्वपाशापहानिः क्षीणैः क्लेशैर्जन्ममृत्युप्रहाणिः । तस्याभिध्यानात्तृतीयं देहभेदे विश्वैश्वर्यं केवल आप्तकामः' ( श्वे० १।११ ) इत्येवमाद्या ॥ ५ ॥

**देहयोगाद्वा सोऽपि ॥ ६ ॥**

कस्मात्पुनर्जीवः परमात्मांश एव संस्तिरस्कृतज्ञानैश्वर्यो भवति । युक्तं तु ज्ञानैश्वर्ययोरतिरस्कृतत्वं विस्फुलिङ्गस्येव दहनप्रकाशनयोरिति। उच्यते। सत्यमेवैतत् । सोऽपि तु जीवस्य ज्ञानैश्वर्यतिरोभावो देहयोगाद्देहेन्द्रियमनोबुद्धिविषयवेदनादियोगाद्भवति । अस्ति चात्रोपमा यथाग्नेर्दहनप्रकाशनसंपन्नस्याप्यरणिगतस्य दहनप्रकाशने तिरोहिते भवतो यथा वा भस्मच्छन्नस्य । एवमविद्याप्रत्युपस्थापितनामरूपकृतदेहाद्युपाधियोगात्तदविवेकभ्रमकृतो जीवस्य ज्ञानैश्वर्यतिरोभावः। वाशब्दो जीवेश्वरयोरन्यत्वाशङ्काव्या-

वृत्त्यर्थः । ननु अन्य एव जीव ईश्वरादस्तु तिरस्कृत ऐश्वर्यत्वात्किं देहयोगकल्पनया । नेत्युच्यते । न ह्यन्यत्वं जीवस्येश्वरादुपपद्यते 'सेयं देवतैक्षत' (छा० ६।३।२) इत्युपक्रम्य 'अनेन जीवेनात्मनाऽनुप्रविश्य' (छा० ६।३।२) इत्यात्मशब्देन जीवस्य परामर्शात् । 'तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' (छा० ६।९।४) इति च जीवायोपदिशतीश्वरात्मत्वम् । अतोऽनन्य एवेश्वराज्जीवः संदेहयोगात्तिरोहित ऐश्वर्यो भवति । अतश्च न सांकल्पिकी जीवस्य स्वप्ने रथादिसृष्टिर्घटते । यदि च सांकल्पिकी स्वप्ने रथादिसृष्टिः स्यान्नैवानिष्टं कश्चित्स्वप्नं पश्येत् । नहि कश्चिदनिष्टं संकल्पयते । यत्पुनरुक्तं जागरितदेशश्रुतिः स्वप्नस्य सत्यत्वं स्थापयतीति न तत्साम्यवचनं सत्यत्वाभिप्रायं स्वयंज्योतिष्ट्वविरोधात् । श्रुत्यैव च स्वप्ने रथाद्यभावस्य दर्शितत्वात् । जागरितप्रभववासनानिर्मितत्वात्तु स्वप्नस्य तत्तुल्यनिर्भासत्वाभिप्रायं तत् । तस्मादुपपन्नं स्वप्नस्य मायामात्रत्वम् ॥ ६ ॥

## २ तदभावाधिकरणम् । सू० ७–८

## तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥ ७ ॥

स्वप्नावस्था परीक्षिता सुषुप्तावस्थेदानीं परीक्ष्यते । तत्रैताः सुषुप्तिविषयाः श्रुतयो भवन्ति । क्वचिच्छ्रूयते 'तद्यत्रैतत्सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानात्यासु तदा नाडीषु सृप्तो भवति' (छा० ८।६।३) इति । अन्यत्र तु नाडीरेवानुक्रम्य श्रूयते 'ताभिः प्रत्यवसृप्य पुरीतति शेते' (बृ० २।१।१९) इति । तथान्यत्र नाडीरेवानुक्रम्य 'तासु तदा भवति यदा सुप्तः स्वप्नं न कंचन पश्यत्यथास्मिन्प्राण एवैकधा भवति' (कौषी० ४।१९) इति । तथान्यत्र 'य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते' (बृ० २।१।१७) इति । तथान्यत्र 'सता सोम्य तदा संपन्नो भवति स्वमपीतो भवति' (छा० ६।८।१) इति । 'प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरम्' (बृ० ४।३।२१) इति च । तत्र संशयः किमेतानि नाड्यादीनि परस्परनिरपेक्षाणि भिन्नानि सुप्तिस्थानान्याहोस्वित्परस्परापेक्षयैकं सुप्तिस्थानमिति । किं तावत्प्राप्तं भिन्नानीति । कुतः

एकार्थत्वात् नह्येकार्थानां चित्परस्परापेक्षत्वं दृश्यते ीहिय ादीनाम् । नाड्यादीनां त्वेकार्थता सुषुप्तौ दृश्यते—'नाडीषु सृप्तो भवति' ( ा ८।६।३) 'पुरीतति शेते' (बृ० २।१।१९) इति च तत्र तत्र सप्तमीनिर्देश ल्य-त्वात् । ननु नैवं सति सप्तमीनिर्देशो दृश्यते ' ता सोम्य तदा संप ो भ ति' (छा० ६।८।१) इति । नैष दोषः । त्रापि सप्त यर्थस्य ग यमान-त्वात् । वाक्यशे ो हि तत्रायतनैषी जीवः सदुप पैतीत्याह 'अन्यत्रा-यतनमलब्ध्वा प्राणमेवोपश्रयते' ( ा० ६।८।२ ) ति प्राण ब्देन तत्र प्रकृतस्य सत उपादानात् । आयतनं च सप्तम्यर्थः । सप्तमीनिर्देशोऽपि तत्र वाक्यशेषे दृश्य 'सति संपद्य न विदुः सति पद्यामहे' (छा० ६।९।२ ) इति । सर्वत्र च विशेषविज्ञानोपरमलक्षणं सुषुप्तं न विशि-ष्यते ।तस्मादेकार्थत्वा ाड्यादीनां विकल्पेन कदाचित्किंचित्स्थानं स्वापा-योपसर्पतीति । एवं प्राप्ते प्रतिपाद्यते तदभावो नाडीष्वात्मनि चेति । तदभाव इति तस्य प्रकृतस्य स्वप्नदर्शनस्याभावः सुषुप्तमित्यर्थः । नाडी-ष्वात्मनि चेति समुच्चयेनैतानि नाड्यादीनि स्वापायोपैति न विकल्पे-नेत्यर्थः । कुतः तच्छ्रुतेः । तथाहि सर्वेषामेव नाड्यादीनां तत्र त सुषुप्तिस्थानत्वं श्रूयते तच्च समु ये संगृहीतं भवति । विकल्पे ह्येषां पक्षे बाधः स्यात् । **नन्वे**कार्थत्वाद्विकल्पो नाड्यादीनां व्रीहियवादिवदित्यु-क्तम् । नेत्युच्यते । नह्येकविभक्तिनिर्देशमात्रेणैकार्थत्वं विकल्पश्चापतति । नानार्थत्वसमुच्चययोरप्येकविभक्तिनिर्देशदर्शनात्प्रासादे शेते पर्यङ्के शेत इत्येवमादिषु । तथेहापि नाडीषु पुरीतति ब्रह्मणि च स्वपितीत्येतदुपपद्य समु यः । तथाच श्रुतिः 'तासु तदा भवति यदा सुप्तः स्व न कंचन पश्यत्यथास्मिन्प्राण एवैकधा भवति' ( कौषी० ४।१९ ) इति समुच्चयं नाडीनां प्राणस्य च सुषुप्तौ श्रावयत्येकवाक्योपादानात् । प्राण च ह्मत्वं समधिगतम् 'प्राण थानुगमात्' ( ब्र० सू० १।१।२८ ) इत्यत्र । यत्रापि निरपेक्षा इव नाडीः सुप्तिस्थानत्वेन श्रावयति 'आसु तदा नाडी सृप्तो भवति' ( छा० ८।६।३ ) इति । त्रापि प्रदेशान्त-रप्रसिद्धस्य णोऽप्रतिषेधान्नाडीद्वारेणैव ब्रह्म येवावति त इति प्रती-

ते । नचैवमपि नाडीषु सप्तमी विरुध्यते। नाडीद्वारापि ब्र गोपसर्पन्सुप्त एव नाडीषु भवति । यो हि गङ्गया सागरं गच्छति गत एव स गङ्गायां भवति । अपिचात्र रश्मिनाडीद्वारात्मकस्य ब्रह्मलोकमार्गस्य विवक्षितत्वान्नाडीस्तुत्यर्थं सुप्तिसंकीर्तनम् । 'नाडीषु सृप्तो भवति' (छा ८।६।३) इत्युक्त्वा 'तं न कश्चन पाप्मा स्पृशति' (छा० ८।६।३) इति ब्रुवन्नाडीः प्रशंसति । ब्रवीति च पाप्मस्पर्शाभावे हेतुम्—'तेजसा हि तदा संपन्नो भवति' (छा० ८।६।३) इति । तेजसा नाडीगतेन पित्ताख्येनाभिव्याप्तकरणो न बाह्यान्विषयानीक्षत इत्यर्थः। अथवा तेजसेति ब्र ण एवायं निर्देशः। श्रुत्यन्तरे 'ब्रह्मैव तेज एव' (बृ० ४।४।७) इति तेजःशब्दस्य ब्रह्मणि प्रयुक्तत्वात् । ब्रह्मणा हि तदा संपन्नो भवति नाडीद्वारेणातस्तं न कश्चन पाप्मा स्पृशतीत्यर्थः । ब्रह्मसंपत्तिश्च पाप्मस्पर्शाभावे हेतुः समधिगतः 'सर्वे पाप्मानोऽतो निवर्तन्तेऽपहतपाप्मा ह्येष ब्र ।-लोकः' (छा० ८।४।२) इत्यादिश्रुतिभ्यः । एवंच सति प्रदेशान्तरप्रसिद्धेन ब्रह्मणा सुषुप्तिस्थानेनानुगतो नाडीनां समुच्चयः समधिगतो भवति। तथा पुरीततोऽपि ब्रह्मप्रक्रियायां संकीर्तनात्तदनुगुणमेव सुप्तिस्थानत्वं विज्ञायते 'य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते' (बृ० २।१।१७) इति हृदयाकाशे सुप्तिस्थाने प्रकृत इदमुच्यते 'पुरीतति शेते' (बृ० २।१।१९) इति । पुरीतदिति हृदयपरिवेष्टनमुच्यते । तदन्तर्वर्तिन्यपि हृदयाकाशे शयानः शक्यते पुरीतति शेत इति वक्तुम् । प्राकारपरिक्षिप्तेऽपि पुरे वर्तमानः प्राकारे वर्तत इत्युच्यते । हृदयाकाशस्य च ह्मत्वं समधिगतम्—'दहर उत्तरेभ्यः' (ब्र० सू० १।३।१४) इत्यत्र । तथा नाडीपुरीततसमुच्चयोऽपि 'ताभिः प्रत्यवसृप्य पुरीतति शेते' (बृ० २।१।१९) इत्येकवाक्योपादानादवगम्यते । सत्प्राज्ञयोश्च प्रसिद्धमेव ह्मत्वम् । एवमेतासु श्रुतिषु त्रीण्येव सुषुप्तिस्थानानि संकीर्तितानि नाड्यः रीतद्ब्रह्म चेति । तत्रापि द्वारमात्रं नाड्यः पुरीतच्च, ब्रह्मैव त्वेकं सु प्ति ानम् । अपिच नाड्यः पुरीतद्वा जीवस्योपाध्याधार एव भवति तत्रास्य

करणानि वर्तन्त इति । नह्युपाधिसंबन्धमन्तरेण एव जी धारः कश्चित्संभवति, ब्रह्माव्यतिरेकेण स्वमहिमप्रतिष्ठितत्वात् ब्रह्माधारत्वम-प्यस्य प्ते नैवाधाराधेयभेदाभिप्रायेणोच्यते थं हि तादात्म्याभिप्रा-येण । आह 'सता ोम्य तदा संपन्नो भवति स्वमपीतो भवति' (छा ६।८।१) इति । स्वशब्देनात्माभिलप्यते, रूपमाप : प्तो भवती-त्यर्थः । अपिच न कदाचिज्जीवस्य ब्र णा संपत्तिर्नास्ति स्वरूपस्यानपायि-त्वात् । जागरितयोस्तूपाधिसंपर्कवशात्पररूपापत्तिमिवापेक्ष्य तदुपशमा-त्सुषुप्तेः रूपापत्तिर्वक्ष्यते । अतश्च सुप्तावस्थायां कदाचित्सता संपद्यते कदा-चिन्न संपद्यत इत्ययुक्तम् । अपिच स्थानविकल्पाभ्युपगमेऽपि विशेषवि ानो-पशमलक्षणं तावत्सुषुप्तं न कचिद्विशिष्यते । तत्र सति संपन्नस्तावत्तदेकत्व विजानातीति युक्तम् । 'तत्केन कं विजानीयात्' । ( २।४।१४) ति श्रुतेः । नाडीषु पुरीतति च शयानस्य न किंचिद्विज्ञाने कारणं शक्यं विज्ञातुं, भेदविषयत्वात् 'यत्र वा अन्यदिव स्यात्तत्रान्योऽन्यत्पश्येत्' ( बृ० ४।३।३१ ) इति श्रुतेः । **ननु** भेदविषयस्याप्यतिदूरादिकारणम-विज्ञाने स्यात् । बाढम् । एवं स्याद्यदि जीवः स्वतःपरिच्छिन्नोऽभ्युपग-म्येत, यथा विष्णुमित्रः प्रवासी स्वगृहं न पश्यति । नतु जीवस्योपाधि-व्यतिरेकेण परिच्छेदो विद्यते । उपाधिगतमेवातिदूरादिकारणमविज्ञान इति यद्युच्येत तथाप्युपाधेरुपशान्तत्वात्सत्येव संप ो न विजानातीति युक्तम् । नच यमिह तुल्यवन्नाड्यादिसमुच्चयं प्रतिपादया : । नहि ना : सुप्तिस्थानं पुरीतद्वेत्यनेन विज्ञानेन किंचित्प्रयोजनमस्ति । नह्येत-द्विज्ञानप्रतिबद्धं किंचित्फलं श्रूयते । नाप्येतद्वि ानं फलवतः कस्यचिदङ्ग-मुपदिश्यते । त्वनपायि प्तिस्थानमित्येतत्प्रतिपादयामः । तेन विज्ञानेन प्रयोजनमस्ति जीवस्य त्मत्वावधारणं जागरि व्यवहार-विमुक्तत्वावधारणं च । तस्मादात्मैव सुप्तिस्थानम् ॥ ॥

**अतः प्रबोधोऽस्मात् ८**

ाचात्मैव प्तिस्थानमत एव च कारणान्नित्यवदेवास्मादात्मनः प्रबोधः धिकारे शिष्यते 'कुत एतदागात्' ( २।१।१६ )

इत्यस्य प्रश्नस्य प्रतिवचनावसरे 'यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्यु रन्त्ये-मेवैतस्मादात्मनः सर्वे प्राणाः' ( बृ० २।१।२० ) इत्यादिना । 'स आग य न विदुः सत आगच्छामहे' ( छा० ६।१ ।२ ) इति च। विकल्प्यमानेषु तु सुषुप्तिस्थानेषु कदाचिन्नाडीभ्यः प्रतिबुध्यते कदाचित्पुरीततः कदाचिदात्मन इत्यशासिष्यत् । तस्मादप्यात्मैव सुप्तिस्थानमिति ॥ ८ ॥

## ३ कर्मानुस्मृतिशब्दविध्यधिकरणम् सू० ९

## स एव तु कर्मानुस्मृतिशब्दविधिभ्यः

तस्याः पुनः सत्संपत्तेः प्रतिबुध्यमानः किं य एव सत्संपन्नः स एव प्रतिबुध्यत उत स वाऽन्यो वेति चिन्त्यते। तत्र प्राप्तं तावदनियम इति। कुतः यदा हि जलराशौ कश्चिज्जलबिन्दुः प्रक्षिप्यते जलराशिरेव स तदा भवति पुनरुद्धरणे च स एव जलबिन्दुर्भवतीति दुःसंपादम् । तद्व-त्सुप्तः परेणैकत्वमापन्नः संप्रसीदतीति न स एव पुनरुत्थातुमर्हति । स्मात्स एवेश्वरो वाऽन्यो वा जीवः प्रतिबुध्यत इत्येवं प्राप्त इदमाह स एव तु जीवः सुप्तः ा स्थ्यं गतः पुनरुत्ति ति नान्यः । कस्मात्। कर्मानुस्मृतिशब्दविधिभ्यः । विभज्य हेतुं दर्शयिष्यामि । कर्मशेषानुष्ठान-दर्शनात्तावत्स एवोत्थातुमर्हति नान्यः । तथाहि पूर्वेद्युरनुष्ठितस्य कर्मणोऽपरेद्युः शेषमनुतिष्ठन्दृश्यते । नचान्येन सामिकृतस्य कर्मणोऽन्यः शेष-क्रियायां प्रवर्तितुमर्हति । अतिप्रसङ्गात्। तस्मादेक एव पूर्वेद्युरपरेद्युश्चैक कर्मणः कर्तेति गम्यते । इतश्च स एवोत्ति ति यत्कारणमतीतेऽहन्यहम-दोऽद्राक्षमिति पूर्वानुभूतस्य पश्चात्स्मरणमन्यस्योत्थाने नोपपद्यते । न-ह्यन्यदृष्टमन्योऽनुस्मर्तुमर्हति । सोऽहमस्मीति चात्मानुस्मरणमात्मान्तरो-त्थाने नावकल्पते । शब्देभ्य तस्यैवोत्थानमवगम्यते । तथाहि 'पुनः प्रतिन्यायं प्रतियोन्याद्रवति बुद्धान्तायैव' ( बृ ४।३।१६ ) 'सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्र लोकं न विन्दन्ति' ( छा ८।३।२ ) 'त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको यद्यद्भवन्ति तदाभवन्ति' (छा ६।९।३) त्येवमादयः शब्दाः

पप्रबोधाधिकारे पठि । नात्मान्तरोत्थाने ऋस्समीयुः । मविद्याविधिभ्य वमेवावगम्यते। अन्यथा हि कर्मविद्याविधयोऽनर्थकाः स्युः। अन्योत्थानपक्षे हि सुप्तमात्रो मुच्य इत्यापद्येत । एवं चेत् । द किं कालान्तरफलेन कर्मणा विद्यया वा तं ात् । अपिचान्योत्थानपक्षे यदि ावच्छरीरान्तरे व्यवहरमाणो जीव उत्तिष्ठेत्तत्रत्यव्य हारलोपप्र : ात्। अथ तत्र सुप्त उत्तिष्ठेत्कल्पनानर्थक्यं ात्। यो हि यस्मिञ्शरीरे : तस्मिन्नोत्तिष्ठत्यन्यस्मि ञ्शरीरे प्तोऽन्यस्मिन्नुत्तिष्ठतीति को ां कल्पना ां ाभः स्यात् । अथ मुक्त उत्तिष्ठेदन्तवान् मोक्ष आपद्येत निवृत्ताव च पुनरुत्थानमनुपप म् । एतेनेश्वरस्योत ानं प्रत्युक्तम्। नि निवृत्ताविद्यत्वात्। अकृताभ्यागमकृतविप्रणाशौ च दुर्निवारा न्योत्थानपक्षे म्। तस्मात् एवोत्तिष्ठति नान्य इति। यत्पुनरुक्तं यथा ज राशौ प्रक्षि प्तो जलबिन्दुर्नोद्धर्तुं शक्यत एवं सति संपन्नो जीवो नोत्पति महंतीति, तत्परिह्रियते। युक्तं तत्र विवेककारणाभावाज्जलबिन्दोरनुद्धरणम्। इह तु विद्यते वि वे कारणं कर्म चाविद्या चेति वैषम्यम्। दृश्यते च दुर्विवेचयोरप्यस्मज्जातीयैः क्षीरोदकयोः संसृ योर्हंसेन विवेचनम्। अपिच न जीवो ना श्चित्परस्मादन्यो विद्य यो जलबिन्दुरि ज रा ः तो विविच्येत। देव तूपाधिसंपर्काज्जीव इत्युपचर्यत इत्यसकृत्प्रपञ्चितम्। एवं ति या दे्को ाधिगता बन्धानुवृत्तिस्तावदेकजीवव्यवहारः उपाध्यन्तरगतायां बन्धानुवृत्तौ जीवान्तरव्यवहारः। स एवायमुपाधिः ापप्र ोधयोर्बीजाङ्कुरन्यायेनेत्यतः एव जीवः प्रतिबुध्यत इति युक्तम्॥ ९॥

## मुग्धेऽर्धसंपत्त्यधिकरणम् सू. १

## मुग्धेऽर्धसंपत्तिः परिशेषात् १

अस्ति मुग्धो ामयं मूर्च्छित ति लौकिकाः कथयन्ति। किम- इति परीक्षायामुच्यते । ति द ाः शरीरस्थ जी प्रसि ा गरितं : षुप्तमिति । चतुर्थी शरीरादपसृप्तिः ।

पञ्चमी काचिदवस्था जीवस्य श्रुतौ स्मृतौ वा प्रसिद्धास्ति । तस्मात्तत्त्रयाणामेवावस्थानामन्यतमावस्था मूर्च्छेत्येवं प्राप्ते ब्रूमः—न तावन्मुग्धो जागरितावस्थो भवितुमर्हति । नह्ययमिन्द्रियैर्विषयानीक्षते । स्यादेतत् । इषुकारन्यायेन मुग्धो भविष्यति । यथेषुकारो जाग्रदपीष्वासक्तमनस्तया नान्यान्विषयानीक्षत एवं मुग्धो मुसलसंपातादिजनितदुःखानुभवव्यग्रमनस्तया जाग्रदपि नान्यान्विषयानीक्षत इति । न । अचेतयमानत्वात् । इषुकारो हि व्यापृतमना ब्रवीतीषुमेवाहमेतावन्तं कालमुपलभमानोऽभूवमिति । मुग्धस्तु लब्धसंज्ञो ब्रवीत्यन्धे तमस्यहमेतावन्तं कालं प्रक्षिप्तोऽभूवं न किंचिन्मया चेतितमिति । जाग्रतश्चैकविषयविषक्तचेतसोऽपि देहो विध्रियते । मुग्धस्य तु देहो धरण्यां पतति । तस्मान्न जागर्ति नापि स्वप्नान्पश्यति निःसंज्ञकत्वात् । नापि मृतः प्राणोष्मणोर्भावात् । मुग्धे हि जन्तौ मृतोऽयं स्यान्न वा मृत इति संशयाना ऊष्मास्ति नास्तीति हृदयदेशमालभन्ते निश्चयार्थं प्राणोऽस्ति नास्तीति च नासिकादेशम् । यदि प्राणोष्मणोरस्तित्वं नावगच्छन्ति ततो मृतोऽयमित्यध्यवसाय दहनायारण्यं नयन्ति । अथ तु प्राणमूष्माणं वा प्रतिपद्यन्ते ततो नायं मृत इत्यध्यवसाय संज्ञालाभाय भिषज्यन्ति । पुनरुत्थानाच्च न दिष्टं गतः । नहि यमरा[illegible]त्प्रत्यागच्छति । अ[illegible] तु तर्हि सु[illegible]प्तो निःसंज्ञ[illegible]दमृतत्व[illegible] । न । वैलक्ष[illegible]यात् । मुग्धः कदाचिच्चिरमपि नोच्छ्वसिति सवेपथुर[illegible] देहो भवति भयानकं च वदनं विस्फारिते ने[illegible] । [illegible]स[illegible] प्र[illegible] द[illegible]स्तुल्यकालं पुनः पुनरुच्छ्वसिति निमीलिते अस्य नेत्रे [illegible]तः नचा[illegible] देहो वेपते । पाणिपेषणमात्रेण च [illegible]प्तमुत्थापयन्ति नतु मुग्धं द्गर-घातेनापि । निमित्तभेद[illegible] भवति मोहस्वापयोः । [illegible]सलसंपातादिनिमित्तत्वान्मोहस्य, श्रमादिनिमित्तत्वाच्च स्वाप[illegible] । नच लो[illegible]ऽस्ति प्रसिद्धि[illegible] मुग्[illegible]ः [illegible]प्त इति । परिशेषादर्ध[illegible]पत्तिर्मुग्धतेत्यवगच्छामः । निः[illegible]ज्ञत्वात्संप[illegible] इतरस्मा[illegible]लक्षण्यादसंप[illegible] इति । क[illegible] पुनरर्धसंपत्तिर्मुग्ध[illegible]ति [illegible]यते [illegible]कुम् । यावता सुप्तं प्रति तावदु[illegible] [illegible]त्या 'सता सोम्य तदा [illegible] [illegible]तो भवति' ( [illegible] ६।८।१) इति 'अत्र [illegible]नोऽस्तेनो भवति' ( [illegible]० [illegible]।३।२२ ) 'नै[illegible]

सेतुमहोरात्रे रतो न जरा न मृत्युर्न शोको न सुकृतं दुष् तम् ’(छा० ८।४।१ ). इत्यादि । जीवे हि सुकृतदुष्क योः प्राप्तिः सुखि त्वदुःखि-प्रत्ययोत्पादनेन भवति । नच सुखित्वप्रत्ययो :खि प्रत्ययो । सुषुप्ते विद्येते, मुग्धे पि ौ प्रत्ययौ नै विद्येते । स्मादुपाध्युपशमात् सुप्त न - ग्धेऽपि कृत ंपत्तिरेव भवि मर्हति नार्ध ंपत्तिरिति । अत्रोच्यते— ब्रूमो मुग्धेऽर्धसंपत्तिर्जीव णा भ तीति । किं र्धेन सुषुप्तपक्षस्य भवति मुग्धत्वमर्धेनावस्थान्तरपक्ष ेति ब्रूमः । दर्शिते च ोहस्य ापेन ा-यवैषम्ये । रं चैतन् रणस्य । यदा शेषं र्म भवति दा वाङ्मनसे प्रत्यागच्छ : । यदा निरवशेषं कर्म भवति तदा प्राणोष्मा-णावपगच्छतः । तस्मादर्ध ंपत्तिं िद इच्छ न्ति । यत्तूक्तं न पञ्चमी चिदवस्था प्रसिद्धास्तीति । नै दो : । कादाचित्कीयमवस्थेति प्रसिद्धा ात् । प्रसिद्धा चैषा लोकायुर्वेदयोः । अर्धसंपत्त्यभ्युपगमा न पञ्चमी ग यत इत्यनवद्यम् ॥ १ ॥

### ५ उभयलिङ्गाधिकरणम् । सू ११–२१

## न स्थानतोऽपि परस्योभयलिङ्गं हि ११

येन ब्रह्मणा सुषुप्त्यादिषु जीव उपाध्युपशमात्संप ते तस्येदानीं -रूपं श्रुतिवशेन निर्धार्यते । सन्त्यु यलिङ्गाः श्रुतयो वि याः ‘ र्वं-र्मा सर्वकामः सर्वगन्धः र्वरसः’ ( ३।१४।२ ) इत्येवमाद्याः विशेषलिङ्गाः । ‘अस्थूलमन वह्र मदीर्घम्’ ( बृ० ३।८।८ ) इत्ये-माद्याश्च निर्विशेषलिङ्गाः । किमासु श्रुतिषूभयलि ं प्रतिपत्तव्यमुता-न्य रलिङ्गम् । यदाप्यन्यतरलिङ्गं तदापि ि विशेषमु िर्विशेषमिति मीमांस्यते । तत्रोभ लि त्यनुग्रहादु यलि े ेत्येवं प्राप्ते ब्रूमः ताव एव पर ह्मण यलिङ्गत्वमुपपद्यते न े स्तु एव रूपादिवि ेषोपेतं तद्वि रीतं चेत्यवधारयितुं यं विरोधात् । अस्तु तर्हि स्थानतः पृथिव्याद्युपाधियोगादिति । तदपि ोपपद्य े । ु-

---

१ स्थानं उपाधि योगात् ।

पाधियोगादप्यन्यादृशस्य वस्तुनोऽन्यादृशः भावः संभवति । नहि स्वच्छः सन्स्फटिकोऽलक्तकाद्युपाधियोगादस्वच्छो भवति भ्रममात्रत्वा-दस्वच्छताभिनिवेशस्य । उपाधीनां चाविद्याप्रत्युपस्थापितत्वात् । अत-श्चान्यतरलिङ्गपरिग्रहेऽपि समस्तविशेषरहितं निर्विकल्पकमेव ब्रह्म प्रति-पत्तव्यं न तद्विपरीतम् । सर्वत्र हि ब्रह्मस्वरूपप्रतिपादनपरेषु वाक्येषु 'अशब्दमस्पर्शमरूपमव्ययम्' ( क ३।१५। मुक्तिको २।७२ ) इत्ये-मादिष्वपास्तसमस्तविशेषमेव ब्रह्मोपदिश्यते ॥ ११ ॥

## न भेदादिति चेन्न प्रत्येकमतद्वचनात् ॥ १२ ॥

अथापि स्याद्यदुक्तं निर्विकल्पमेकलिङ्गमेव ब्रह्म नास्य स्वतः स्थानतो वोभयलिङ्गत्वमस्तीति । तन्नोपपद्यते । कस्मात् । भेदात् । भिन्ना हि प्रतिविद्यं ब्रह्मण आकारा उपदिश्यन्ते । चतुष्पाद्ब्रह्म षोडशकलं ब्रह्म वामनीत्वादिलक्षणं ब्रह्म त्रैलोक्यशरीरवैश्वानरशब्दोदितं ब्रह्मेत्येवंजाती-काः । तस्मात्सविशेषत्वमपि ब्रह्मणोऽभ्युपगन्तव्यम् । **ननूक्तं** नोभय-लिङ्गत्वं ब्रह्मणः संभवतीति । अयमप्यविरोधः । उपाधिकृतत्वादाकार-भेदस्य । अन्यथा हि निर्विषयमेव भेदशास्त्रं प्रसज्येतेति चेत् । नेति ब्रूमः । कस्मात् । प्रत्येकमतद्वचनात् । प्रत्युपाधिभेदं ह्यभेदमेव ब्रह्मणः श्रावयति शास्त्रम् 'यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं शारीरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मा' ( बृ २।५।१ ) इत्यादि । अतश्च न भिन्नाकारयोगो ब्रह्मणः शास्त्रीय इति शक्यते वक्तुम् । भेदस्योपासनार्थत्वादभेदे तात्पर्यात् ॥ १२ ॥

## अपि चैवमेके ॥ १३ ॥

अपि चैवं भेददर्शननिन्दापूर्वकमभेददर्शनमेवैके शाखिनः समामन-न्ति 'मनसैवेदमाप्तव्यं नेह नानास्ति किंचन । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' ( क० ४।११ ) इति । तथान्येपि 'भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्' ( श्वे० १।१२ ) इति समस्तस्य भोग्यभोक्तृनियन्तृलक्षणस्य प्रपञ्चस्य ब्रह्मैकस्वभावतामधीयते ॥ १३ ॥

क ं नराकार दुपदेशिनीष्वन रोपदेशिनीषु च विषया श्रुति सतीष्वना ारमे ब्रह्म धार्यते न पुनर्विपरीतमिति । अत त्तरं पठति

## अरूपवदे हि तत ध नत्वात् ४

रूपाद्या ाररहि मे ब्रह्मावधारयितव्यं न रूपादिमत् । कस्मात् । त्प्रधानत ात् । 'अ थूलमन व मदीर्घम्' ( बृ० ३।८।८ ) 'अश-ब्द पर्शमरूपमव्ययम्' ( कठ० ३।१५। मुक्ति० २। २ ) 'आ ाशो वै ाम ामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्र ' ( ा ८। ४।१ ) 'दिव्यो मूर्तः पुरुषः सबा ाभ्यन्तरो जः' ( मुण्ड २। ।२ ), 'तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबा मयमात्मा ब्र सर्वानुभूः' ( बृ० २। ५।१९ ) इत्ये मादीनि वाक्यानि निष्प्रपञ्च ात्मतत्त धानानि नार्था-न्तरप्रधानानीत्येतत्प्रति ापितं 'तत्तु समन्वयात्' ( ब्र० सू १।१।४ ) इत्यत्र । स्मादेवंजातीयकेषु वा येषु यथाश्रुतं निराकारमेव ब्रह्मावधार-यितव्यम् । तराणि त्वाकारवद्ब्र विषयाणि वाक्यानि न तत्प्रधानानि । पासनाविधिप्रधानानि हि तानि तेष्वसति विरोधे यथाश्रुतमाश्रयित-व्यम् । ति विरोधे त्प्रधानान्यतत्प्रधानेभ्यो बलीयांसि भवन्तीति । एष विनिगमनायां हेतुः । ेनोभयीष्वपि श्रुतिषु तीष्वनाकारमेव ब्रह्मा-धार्यते न नर्विपरीतमिति ॥ १४ ॥

ा ाकार द्विषयाणां श्रुतीनां गति रित्यत आह

## वैयर्थ्य त् १५

यथा प्रकाशः सौरश्चान्द्रमसो वा वियद्व्याप्यावति मानोऽङ्गुल्याद्युपा-धिसंबन्धात्तेष जुव ादिभावं प्रतिपद्यमानेषु द्भावमिव प्रतिपद्यते । एवं - ापि पृथिव्या ुपाधि ंबन्धात्तदाकारतामिव प्रतिपद्यते तदालम्ब ाो ब्रह्मण आकारविशेषोपदेश उपा नार्थो न विरुध्यते । एवमवैयर्थ्यमाका-र द्ब्र विषया ा पि ा यानां विष्यति । नहि वेदवाक्यानां क चिद-र्थवत्त्वं चिदनर्थवत्त्व मिति यु ं तिपत्तुं प्र ा त्वाविशेषात् । न्वे-पि त्पुर त्प्रति ा ं नोपाधियोगादु भयलिङ्गत्वं णोऽस्तीति

तद्विरुध्यते । नेति ब्रूमः । उपाधिनिमित्त वस्तुधर्मत्वानुपपत्तेः । उपाधीनां चाविद्याप्रत्युपस्थापितत्वात् । सत्यामेव च नैसर्गिक्यामविद्यायां लोकवेदव्यवहारावतार इति तत्र त्रावोचाम ॥ १५ ॥

## आह च तन्मात्रम् १६

आह च श्रुतिश्चैतन्यमात्रं विलक्षणरूपान्तररहितं निर्विशेषं ब्रह्म—'स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवैवं वा अरेऽयमात्मानन्तरोऽबाह्यः त्स्नः प्रज्ञानघन एव' ( बृ० ४।५।१३ ) इति । एतदुक्तं भवति नास्यात्मनोऽन्तर्बहिर्वा चैतन्यादन्यद्रूपमस्ति चैतन्यमेव तु निरन्तरमस्य स्वरूपम् । यथा सैन्धवघनस्यान्तर्बहिश्च लवणरस एव निरन्तरो भवति न रसान्तरं तथैवेति ॥ १६ ॥

## दर्शयति चाथो अपि स्मर्यते १७

दर्शयति च श्रुतिः पररूपप्रतिषेधेनैव ब्रह्म निर्विशेषत्वात् 'अथात आदेशो नेति नेति' (बृ० २।३।६) इति, 'अन्यदेव तद्विदितादथो अविदि ा-देधि' (के० १।३) 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' (तै० २।४। ) इत्येवमाद्या । बाष्कलिना च बाध्वः पृष्टः नवचनेनैव ब्र प्रोवाचेति श्रूयते—' होवाचाधीहि भो इति स तूष्णीं बभूव तं ह द्वितीये वा तृतीये वा वचन उवाच ब्रूमः खलु त्वं तु न विजानासि। उपशान्तोऽयमात्मा' इति। तथा स्मृतिष्वपि परप्रतिषेधेनैवोपदिश्यते 'ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते । अनादिमत्परं ब्रह्म न सत्त ासदुच्यते' ( १३।१२ ) इत्येवमाद्यासु । तथा विश्वरूपधरो नारायणो नारदमुवाचेति स्मर्यते 'माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद । सर्वभूतगुणैर्युक्तं नैवं मां ज्ञातुमर्हसि' इति ॥ १७ ॥

## अतए चोप ा सूर्यकादिवत् १८

यतएव चायमात्मा चैतन्यरूपो निर्विशेषो वाङ्मनसातीतः परप्रतिषेधोपदेश्योऽतएव चास्योपाधिनिमित्तामपारमार्थिकीं विशेषवत्तामभि-

---

सैन्धवघनो लोहपि : । २ अधि अन्यत् । ३ उपशान्तो निरस्तद्वैतः ।

प्रेत्य जलसूर्यकादिवदित्युपमोपादीयते मोक्षशास्त्रेषु 'यथा ज्योतिरात्मा विव ानपो भिन्ना बहुधै कोऽनुगच्छन् । उपाधिना क्रियते दरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा' इति । 'ए एव हि भूतात्मा भूते भूते व्यवस्थितः । एकधा बहुधा चैव दृश्यते जलचन्द्रवत्' ( बिं० १२) इत्येवमादिषु ॥ १८ ॥

अत्र प्रत्यवस्थीयते

## अम्बु दग्रहणात्तु थात्वम् १

न जलसूर्यकादितुल्यत्वमिहोपपद्यते तद्वदग्रहणात् । सूर्यादिभ्यो हि मूर्तेभ्यः थग्भूतं विप्र ष्टदेशं मूर्तं जलं गृह्यते तत्र यु : सूर्यादिप्रतिबिम्बोदयः । नत्वात ा मूर्तो नचास्मात्पृथग्भूता विप्र देशाश्चोपाधयः सर्वगतत्वात्सर्वानन्यत्वाच्च । स्मादयुक्तोऽयं दृष्टान्त इति ॥ १९ ॥

अत्र प्रतिविधीये

## वृद्धिह्रा भाक्त्वमन्तर्भावादुभ सा ञ्ज दे म् २ ।

युक्त एव त्वयं दृ ान्तो विवक्षितांशसंभवात् । नहि दृ ान्तदा न्तिकयोः क्वचित्कंचिद्वि वक्षितांशं मुक्त्वा सर्वसारूप्यं केनचिद्दर्शयितुं शक्यते । सर्वसारूप्ये हि दृष्टान द न्तिकभावोच्छेद एव स्यात् । नचेदं स्वमनीषया जलसूर्यकादिदृष्टान्तप्रणयनम् । शा प्रणीत त्वस्य प्रयोजनमात्रपन्यस्यते । किं पुनरत्र विवक्षि सारूप्यमिति । तदुच्यते वृद्धि ाभाक्त्वमिति । जलगतं हि सूर्यप्रतिबिम्बं जलवृद्धौ वर्धते जल ासे सति जलचलने चलति जलभेदे भिद्यत इत्येवं जलधर्मानुयायि भवति न परमार्थतः सूर्य थात्वमस्ति । एवं परमार्थतोऽविकृतमेकरूप पि सद्ब्रह्म देहा ुपाध्यन्तर्भावाद्भजत इवोपाधिधर्मान्वृद्धिह्रासादीन् । एवमुभयोर्दृष्टान्तदार्ष्टान्ति कयोः सामञ्जस्यादविरोधः ॥ २ ।

## दर्शनाच्च २१

दर्शयति श्रुतिः परस्यैव णो देहादिषूपाधिष्वन्तरनुप्रवेशम् 'पु द्विपदः पुरश्चे चतुष्पदः । पुरः पक्षी भूत्वा पुरः पुरुष आविशत्' ( २।५।१८ ) इति । 'अनेन जीवेनात्मनानुप्रविश्य'

(छा० ६।३।२) इति च । तस्माद्युक्तमेतत् 'अतएव चोपमा सूर्यकादिवत्' (ब्र सू ३।२।१८) इति । तस्मान्निर्विकल्पकैकलिङ्गमेव ब्र नोभयलिङ्गं विपरीतलिङ्गं चेति सिद्धम् । अत्र केचिद्वे अधिकरणे कल्पयन्ति । प्रथमं तावत् किं प्रत्यस्तमिताशेषप्रपञ्चमेकाकारं ब्रह्मोत प्रपञ्चवदनेकाकारोपेतमिति । द्वितीयं तु स्थिते प्रत्यस्तमितप्रपञ्चत्वे किं सल्लक्षणं ब्रह्मोत बोध क्षणमुतोभयलक्षणमिति । अत्र वयं वदामः सर्वथाप्यानर्थक्यमधिकरणान्तरार भस्येति । यदि तावदनेकलिङ्गत्वं परस्य ब्रह्मणो निरार्तव्यमित्ययं प्रयासस्तत्पूर्वेणैव 'न स्थानतोऽपि' इत्यनेनाधिकरणेन निराकृतमित्युत्तरमधिकरणं 'प्रकाशवच्च' एतद्व्यर्थमेव भवेत् । नच सल्लक्षणमेव ब्रह्म न बोधलक्षणमिति शक्यं वक्तुम् । विज्ञानघन एवेत्यादिश्रुतिवैयर्थ्यप्रसङ्गात् । कथं वा निरस्तचैतन्यं ब्रह्म चेतनस्य जीवस्यात्मत्वेनोपदिश्येत । नापि बोधलक्षणमेव ब्रह्म न सल्लक्षणमिति शक्यं वक्तुम् 'अस्तीत्येवोपलब्धव्यः' (क० ६।१३) इत्यादिश्रुतिवैयर्थ्यप्रसङ्गात् । कथं वा निरस्तसत्ताको बोधोऽभ्युपगम्येत । नाप्युभयलक्षणमेव ब्रह्मेति शक्यं वक्तुम् । पूर्वाभ्युपगमविरोधप्रसङ्गात् । सत्ताव्यावृत्तेन च बोधेन बोधव्यावृत्तया च सत्तयोपेतं ब्रह्म प्रतिजानानस्य तदेव पूर्वाधिकरणप्रतिषिद्धं सप्रपञ्चत्वं ब्रह्मणः प्रसज्येत । श्रुतत्वाददोष इति चेत् । न । एकस्यानेकस्वभावत्वानुपपत्तेः । अथ सत्तैव बोधो बोध एव च सत्ता नानयोः परस्परव्यावृत्तिरस्तीति यद्युच्येत तथापि किं सल्लक्षणं ोत बोधलक्षणमुतोभयलक्षणमित्ययं विल्पो निरालम्बन एव स्यात् । सूत्राणि त्वेकाधिकरणत्वेनैवास्माभिर्नीतानि । अपिच ब्रह्मविषयासु श्रुतिष्वाकारवदनाकारप्रतिपादनेन विप्रतिपन्नास्वनाकारे ह्मणि परिगृहीतेऽवश्यं वक्तव्येतरासां श्रुतीनां गतिः । तादर्थ्येन प्रकाशव त्यादीनि सूत्राण्यर्थवत्तराणि संपद्यन्ते । यदप्याहुराकार ादिन्योऽपि श्रु यः प्रपञ्चप्रविलयमुखेनानाकारप्रतिपत्त्यर्था एव न पृथगर्था इति दपि न समीचीनमिव लक्ष्यते । कथम् । ये हि परविद्याधि रे केचित्प्रपञ्चा उच्यन्ते यथा 'युक्ता ह्यस्य रयः शता दशेत्ययं

१ अस्य जीवभावं ाप्तस्येश्वरस्य दश हरयो विषया इन्द्रियाणि वा ।

वै हरयोऽयं दश च सहस्राणि बहूनि चानन्तानि च' ( २।५।१९ ) इत्येवमादयस्ते भवन्ति प्रविलयार्थाः 'तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यम्' ( ० २।५।१९ ) इत्युपसंहारात्। पुनरुपासनाधिकारे प्रपञ्चा उच्यन्ते यथा 'मनोमयः ण रीरो भारूपः' ( । ० ३।१४।२। ) इत्येवमादयो तेषां विलयार्थत्वं न्याय्यम्। 'स क्रतुं वींत' ( छा ३।१४।१ ) त्येवंजातीयके प्रकृतेनैवोपासनविधिना संबन्धात्। श्रुत्या चैवंजातीयकानां गु नामुपासनार्थत्वेऽवकल्प्यमा न लक्षणया प्रविलयार्थत्वमवकल्पते। सर्वेषां च धारणे प्रविलयार्थत्वे सति 'अरू - द्वेव हि त्प्रधानत्वात्' ( ० सू० ३।२।१ ) इति विनिगमनकार - वचनमन काशं त्। फलमप्येषां ग्रोपदेशं चिद्दुरितक्षयः चि - दैश्वर्यप्राप्तिः चित्क्रममुक्तिरित्यवगम्य एवेत्यतः पार्थगर्थ्यमेवोपासन - वाक्यानां ब्रह्मवाक्यानां च न्याय्यं नैकवाक्यत्वम्। थं चै मेकवाक्यतोत्प्रेक्ष्य इति वक्तव्यम्। एकनियोगप्रतीतेः प्रयाजदर्शपूर्णमा - क्यवदिति चेत्। न। ह्मवाक्येषु नियोगाभा त्। स्तुमात्रप ा- ीनि हि ब्रह्म ाक्यानि न नियोगोपदेशीनीत्ये द्विस्तरेण प्रति ापितं 'त्तु न्वयात्' ( ० सू० १।१।४) इत्यत्र। किंविषयश्चात्र नियोगोऽभिप्रेयत इति वक्तव्यम्। पुरुषो हि नियुज्यमानः कुर्विति स्वव्यापारे कस्मिंश्चिन्नियुज्यते। **ननु** द्वैतप्रपञ्चविलयो न योगविषयो भविष्यति। अ विलापिते हि द्वैतप्रपञ्चे ह्मतत्त्वावबोधो न भ त्यतो तत्त्वावबोधप्रत्यनीकभूतो द्वैत पञ्चः प्रविलाप्यः। यथा स्वर्गकाम यागोऽनुष्ठातव्य उपदिश्यत एवमपवर्गकामस्य प्रपञ्चप्रविलयः। यथाच त सि व्यवस्थि घटादितत्त्वमव भुत्समानेन तत्प्रत्यनीकभूतं : प्रविला एवं ब्रह्मतत्त्वमवबुभुत्समानेन तत्प्रत्यनीकभूतः पञ्चः विलापयितव्यः। ब्रह्मस्वभावो हि पञ्चो न प्रपञ्च भावं , न नामरूपप्रपञ्चप्रविला नेन त्त्वावबोधो भ तीति। अत्र वयं पृच्छामः कोऽयं प्रपञ्चप्रविलयो नाम। किमग्निप्र ापसंप तकाठिन्यप्रविलय इव प्रपञ्चप्रवि यः कर्तव्य आहोस्विदेकस्मिंश्चन्द्रे तिमिरकृतानेकचन्द्र पञ्चवद-

विद्याकृतो णि नामरूपप्रपञ्चो विद्यया प्रविलापयितव्य ति। यदि तावद्विद्यमानोऽयं प्रपञ्चो देहादिलक्षण ाध्यात्मिको पृथिव्यादिलक्षणः प्रविलापयितव्य इत्युच्येत स पुरु मात्रेणा ः प्रविलापयितुमिति तत्प्रविलयोपदेशोऽशक्यवि य ए ात्। एकेन चादिमुक्तेन थिव्यादिप्रविलयः त तीदानीं पृथिव्यादिशून्यं जगद्भविष्यत्। अथाविद्याध्यस्तो ि यं प्रपञ्चो विद्यया प्रवि - प्यत इति ब्रूयात्। ततो ह्मैवाविद्याध्यस्तप्रपञ्चप्रत्याख्यानेनावेदयितव्यम् 'एकमेवाद्वितीयं , तत्सत्यं आत्मा तत्त्वमसि' (छा ६। ८। ) इति तस्मिन्नावेदिते वि । स्वयमेवोत्पद्यते तया चाविद्या बाध्यते, ततश्चाविद्याध्यस्तः सकलोऽयं नामरूपप्रपञ्चः प्रपञ्चवत्प्रविलीयते। अनावेदिते तु ब्र णि ब्रह्मविज्ञानं रु प्रपञ्चप्रविलयं चेति शतकृत्वोऽप्युक्ते, न ब्र वि ानं प्रपञ्चप्रविलयो ा जायते। ननु दिते ब्रह्मणि तद्वि नविषयः प्रपञ्चविलयविषयो वा नियोगः स्यात्। न। निष्प्रपञ्चब्रह्मात्मत्वावेदनेनै ोभयसिद्धेः। रज्जुस्वरूपप्रकाशनेनैव हि - त्स्वरूपविज्ञानमविद्याध्यस्तसर्पादिप्र ञ्चप्रविलयश्च भवति। न च कृतमेव पुनः क्रियते। नियोज्योऽपि पञ्चावस्थायां योऽवग यते जीवो नाम स प्रपञ्चपक्षस्यैव ा द्ब्रह्मपक्षस्यैव वा। प्रथमे वि ल्पे निष्प्रपञ्च - तत्त्वप्रतिपादनेन पृथिव्यादिवज्जीवस्यापि प्रविलापितत्वात प्रपञ्चविलये नियोग उच्येत क वा नियोगनि तया मोक्षोऽ ाप्तव्य उच्ये । द्वितीयेऽपि ब्रह्मैवानियोज्यस्वभावं जी स्य स्वरूपं जीवत्वं त्वविद्याकृतमेवेति प्रतिपादिते ब्रह्मणि नियोज्याभावान्नियोगाभाव एव। द्रष्टव्यादिशब्दा अपि परविद्याधिकारपठितास्तत्त्वाभिमुखीकरणप्रधाना न तत्त्वावबोधविधिप्रधाना भवन्ति। लोकेऽपीदं पश्येदमाकर्णयेति चै - जातीयकेषु निर्देशेषु प्रणिधानमात्रं कुर्वित्युच्यते न साक्षाज्ज्ञानमे - र्विति। याभिमुखस्यापि ानं कदाचिज्ज्ञायते कदाचि जायते स्तं प्रति ानविषय एव दर्शयितव्यो ज्ञापयितुकामेन। तस्मिन्दर्शिते स्व-

१ तं ज्ञानार्थिनम्।

मेव यथाविषयं यथाप्रमाणं च ज्ञानमुत्पद्यते । नच प्रमाणान्तरेणान्यथाप्रसिद्धेऽर्थेऽन्यथाज्ञानं नियुक्तस्याप्युपपद्यते । यदि पुनर्नियुक्तोऽहमित्यन्यथा ानं न्नि ज्ज्ञानं किं तर्हि मानसी सा क्रिया । स्वयमेव चेदन्यथोत्पद्येत भ्रान्तिरेव स्यात् । ज्ञानं प्रमाणजन्यं यथाभूतवि च न न्नियोगशतेनापि कारयितुं शक्यते । नच तिषेधशतेनापि वारयितुं शक्यते । नहि तत्पुरुषत , वस्तुतन्त्रमेव हि तत् । अतोऽपि नियोगाभावः । किंचान्यन्नियोगनि तयैव पर्यवस्यत्याम्नाये यदभ्युपगतमनियोज्यब्रह्मात्मत्वं जीवस्य दप्रमाणकमेव त् । अथ शास्त्रमेवानियोज्यब्रह्मात्मत्वमप्याचक्षी तदवबोधे च पुरुषं नियुञ्जीत ततो ब्रह्मशास्त्रस्यै- र्थपरता विरुद्धार्थपरता च ज्येयाताम् । नियोगपरतायां च श्रुतहानिरश्रुतकल्पना कर्मफलवन्मोक्षस्यादृष्टफलत्वमनित्यत्वं चेत्येवमादयो दोषा न केनचित्परिहर्तुं शक्याः । तस्मादवगतिनिष्ठान्येव ब्रह्मवाक्यानि न नियोगनि नि । अतश्चैकनियोगप्रतीतेरेकवाक्यतेत्ययुक्तम् । अभ्युपगम्यमानेऽपि च ब्रह्मवाक्येषु नियोगसद्भावे तदेकत्वं निष्प्रपञ्चोपदेशेषु सप्रपञ्चोपदेशेषु चासिद्धम् । नहि शब्दान्तरादिभिः प्रमाणैर्नियोगभेदेऽवगम्यमाने सर्वत्रैको नियोग इति शक्यमाश्रयितुम् । प्रयाजदर्शपूर्णमासवाक्येषु त्वधिकारांशेनाभेदाद्युक्तमेकत्वम् । नत्विह सगुणनि र्गुणचोदनासु कश्चिदेकत्वाधिकारांशोऽस्ति । नहि भारूपत्वादयो गुणाः प्रपञ्चप्रविलयोपकारिणः । नापि प्रपञ्चप्रविलयो भारूपत्वादिगुणोपकारी, परस्परविरोधित्वात् । नहि कृत्स्नप्रपञ्चप्रविलापनं प्रपञ्चैकदेशापेक्षणं चैकस्मिन्धामणि युक्तं समावेशयितुम् । तस्मादस्मदुक्त एव विभाग आ- ारवदनाकारोपदेशानां युक्ततर इति ॥ २१ ॥

## ६ प्रकृतैतावत्त्वाधिकरणम् । सू २२–३०

**प्रकृत र हि प्रतिषेधति ततो ब्रवीति भूयः २२**

'  ाो रूपे मूर्तं चैवामूर्तं च' ( २।३।१ ) इत्युपक्रम्य

---

भिन्नवाक्यार्थविषयः ब्दः ब्दान्तरम् ।

पञ्चमहाभूतानि द्वैराश्येन प्रविभज्यामूर्तरसस्य च पुरुष ब्दोदितस्य महारजनादीनि रूपाणि दर्शयित्वा पुनः पठ्यते 'अथ आदेशो नेति नेति स्मादिति नेत्यन्यत रमस्ति' ( २।३।६ ) इति । कोऽ प्रतिषेध विषय इति जि ासामहे । न त्रेदं दिति वि षितं किंचित्प्रतिषेध्यमुपलभ्यते । इतिशब्देन प्रतिषेध्यं कि पि मर्प्यते नेति नेतीतिपरत्वा ञ्प्रयोग । इति ब्दश्चायं निहि । न एवंशब्दसमानवृत्तिः प्रयुज्यमानो श्यते ' ति ह गोपाध्यायः थयति' -त्येवमादिषु । निहितं चात्र प्रकरणसामर्थ्याद्रूपद्वयं प्रपञ्चं ण यस्यैते द्वे रूपे । नः संशय उपजाय किमयं ति धो रूपवञ्चोभयमपि प्रति धत्याहोस्वि दे तरम् । दाप्येक रं तदापि किं प्रतिषेधति रूपे परिशिन ाहोस्वि द्रूपे प्रति धति परिशिनष्टीति । प्रकृ त्वाविशेषादुभय पि प्रति धतीत्या ामहे । ौ चैतौ प्रतिषेधौ द्विर्नेतिशब्दप्रयोगात् । तयोरेकेन प्रपञ्चं णो रूपं प्रतिषिध्यतेऽपरेण रूपवद्ब्रह्मेति भवति तिः । अथवा ब्रह्मव त तिषिध्य तद्धि ाङ्मन ातीतत्वाद् भाव्यमा द्भावं प्रतिषेधार्हम् । रूपप्रपञ्चः प्रत्य ादिगोचरत्वात्प्रतिषेधार्हः । अभ ासर ादरार्थ ति एवं प्राप्ते ब्रूमः न ावदु यप्रति ध उपपद्यते शून्य ादप्रसङ्गात् किंचिद्धि परमार्थमालम्ब्यापर ार्थः प्रतिषिध्य यथा र ादिषु दयः । परिशि ाणे कस्मिंश्चि द्भा ऽवकल्प्य । भय तिषेधे कोऽन्यो भावः परिशिष्येत् । अपरिशिष्य चान्यस्मिन्य इतरः ति -द्धुमारभ्यते प्रति द्धुमशक्यत्वात्तस्यै पर र्थत्वापत्तेः तिषे ानुपपत्तिः नापि ब्रह्मप्रतिषेध उपपद्यते 'ब्रह्म ब्रवाणि' ( २।१। ) इत्याद्युपक्रमविरोधात् । 'असन्ने ति । असद्ब्रह्मेति द चेत्' ( तैत्ति २।६। ) इत्यादिनिन्दाविरोधात् । 'अस्तीत्येवोपलब्धव्यः' ( ६।१३ ) इत्यवधारणविरोधात् । सर्ववेदान्तव्या ोपप्र

---

[1] पृथिव्यप्तेजोरूपं भूतत्र मूर्तं, वाय्वाकाशरूपं चामूर्तमिति द्विराशित्वेन । [2] महारजनं हरिद्रा ।

वाङ्मनसातीतत्वमपि ब्रह्मणो नाभावाभिप्रायेणाभिधीयते । नहि हता परि रबन्धेन ' विदा गोति परम्' ( त २। ।१ ), ' नन ब्रह्म' ( तै २।१।१ ) इत्येवमादिना वेदा प्रतिपाद्य स्यै पुनरभावोऽभिलप्येत । 'प्रक्षालनाद्धि प दूरादस्पर्शनं वरम्' ति हि न्यायः । प्रतिपादनप्रक्रिया षा 'यतो वाचो नि र्तन्ते । अप्राप मन । ह्' ( तै० २।४। ) इति । एतदुक्तं भ ति—वाङ्मनसातीतम-विषयान्तःपाति प्रत्यगात्मभूतं नित्यशुद्धबुद्धमुक्तस्वभ ति । स्मा-द्ब्रह्मणो रूपप्रपञ्चं प्रतिषेधति परिशिनष्टि ह्मे भ्युपगन्तव्यम् । दे -दुच्यते प्रकृतैता त्त्वं हि प्रतिषेधतीति कृतं दे ावदियत्तापरिच्छि मूर्तामूर्तलक्षणं ब्रह्मणो रूपं तदेष शब्दः प्रतिषेधति । तद्धि तं प्रप-ञ्चितं च पूर्वस्मिन् न्थेऽधिदैवतमध्यात्मं च, ज्जनितमेव च वासनाल-णमपरं रूपममूर्तरसभूतं पुरु शब्दोदितं लि ात ० पाश्रयं महारजना-पमाभिर्दर्शितम् । अमू रस पुरुषस्य च रू योगित्वानुपपत्तेः । देतत्सप्रपञ्चं ब्रह्मणो रूपं संनिहितालम्बनेनेतिकरणेन प्रतिषे कं नत्रं प्रत्युपनीयत ति ग यते । रूपविशे न था निर्दिष्टं पूर्वस्मिन्ग्रन्‍ न धानत्वेन । प्रपञ्चि च तदीये रूप रूपवतः स्वरूपजिज्ञासायामिदमु न्तम् ' आदेशो नेति ने ' ( बृ २।३।६ ) इति । तत्र कल्पितरूपप्रत्याख्‍ नेन णः रूपा-वेदनमिदमिति निर्णीयते । तदास्पदं हीदं म र्यं नेति नेतीति प्रतिषिद्धम् । युक्तं च कार्यस्य वाचारम्भणशब्दादिभ्योऽ त्त्वमिति नेति नेतीति ति धनं नतु ब्रह्मणः । सर्वकल्पनामूलत्वात् । चा य - शा कर्तव्या कथं हि यमे गो यं दर्शयित्वा - पुनः प्रतिषेधति 'प्रक्षालनाद्धि दूरादस्पर्शनं रम्' ति । यतो नेदं शा प्रतिपाद्यत्वेन ह्मणो रूप निर्दिशति, लो प्रसिद्धं त्विदं पद्वयं ब्रह्मणि कल्पितं परामृशति प्रतिषेध्यत ाय प-प्रतिपादन चेति निरवद्यम् । द्वौ चैतौ प्रतिषेधौ था ख न ाये द्वे अपि मूर्तामूर्ते प्रति धतः । । पूर्वः प्रतिषेधो भूतराशिं प्रति धत्युत्तरो

वासनाराशिम् । अथवा 'नेति नेति' ( बृ० २।३।६ ) इति वीप्सेयमितीति यावत्किंचिदुत्प्रेक्ष्यते तत्सर्वं न भवतीत्यर्थः । परिगणितप्रतिषेधे हि क्रियमाणे यदि नैतद्ब्र किमन्यद्ब्रह्म भवेदिति जिज्ञासा स्यात् । वीप्सायां तु सत्यां समस्तस्य विषयजातस्य प्रतिषेधादविषयः प्रत्यगात्मा ब्रह्मेति जिज्ञासा निवर्तते । तस्मात्प्रपञ्चमेव ब्र णि कल्पितं प्रतिषेधति परिशिनष्टि ब्रह्मेति निर्णयः । इतश्चैष एव निर्णयः । यतस्ततः प्रतिषेधाद्भूयो ब्रवीति 'अन्यत्परमस्ति' ( बृ० २।३।६ ) ति। अभावावसाने हि प्रतिषेधे क्रियमाणे किमन्यत्परमस्तीति ब्रूयात् । तत्रैषाक्षरयोजना नेति नेतीति ह्यादिश्य तमेवादेशं पुनर्निर्वक्ति । नेति नेतीत्यस्य कोऽर्थः। नह्येतस्माद्ब्र णो व्यतिरिक्तमस्तीत्यतो नेति नेतीत्युच्यते न पुनः स्वयमेव नास्तीत्यर्थः । त दर्शयत्यन्यत्परमप्रतिषिद्धं ।ीति । यदा पुनरेवमक्षराणि योज्यन्ते नह्येतस्मादिति नेति नेति । नहि प्रपञ्चप्रतिषेधरूपादादेशनादन्यत्पर ादेशनं णोऽ ।ीति । दा त ो वीति च भूय इत्येत धेयविषयं योजयितव्यम् । अथ नामधेयम् ' त्य सत्यमिति प्राणा वै त्यं तेषामे त्यम्' ( ० २।१।२० ) इति हि ब्रवीतीति । तच्च ह्मावसाने प्रतिषेधे समञ्जसं भवति । अभावावसाने तु प्रतिषेधे किं सत्यस्य सत्यमित्युच्येत । तस्माद्ब्रह्मावसानोऽयं प्रतिषेधो नाभावावसान इत्यध्यव ामः ॥ २२ ॥

## तदव्यक्तमाह हि २३

यत्प्रतिषिद्धात्प्रपञ्च ातादन्यत्परं दस्ति चेत्कस्मा गृ त ति। उच्यते—तदव्यक्तमनिन्द्रियग्रा सर्वदृश्यसाक्षित ात् । आह श्रुतिः 'न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवै प । र्मणा वा' ( मुण्ड० ३।१।८ ) ' एष नति नेत्यात्माऽगृह्यो नहि गृह्यते' ( ३।९।२६ ) 'यत्तदद्रेश्यमग्राह्यम्' ( मुण्ड० १। ।६ ) ' दा ए स्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनि ने' ( तै० २।७।१ ) इत्याद्या । ति- ऽयमचिन्त्योऽयमविकार्योऽयमुच्यते' (भ गी २।२५)

## अपि च संराधने प्रत्यक्षानुमानाभ्याम् ॥ २४ ॥

अपिचैनमात्मानं निरस्तसमस्तप्रपञ्चमव्यक्तं संराधनकाले पश्यन्ति योगिनः । संराधनं च भक्तिध्यानप्रणिधानाद्यनुष्ठानम् । कथं पुनरवगम्यते संराधनकाले पश्यन्तीति । प्रत्यक्षानुमानाभ्यां श्रुतिस्मृतिभ्यामित्यर्थः। तथाहि श्रुतिः—'[1]पराञ्चि खानि व्यतृणत्स्वयं भूस्तस्मात्पराङ्पश्यति नान्तरात्मन् । कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्' (क० ४।१) इति । 'ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानः' (मु० ३।१।८) इति चैवमाद्या । स्मृतिरपि—'यं विनिद्रा[2] जितश्वासाः संतुष्टाः संयतेन्द्रियाः । ज्योतिः पश्यन्ति युञ्जानास्तस्मै योगात्मने नमः ॥ योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम्' इति चैवमाद्या ॥ २४ ॥

**ननु** संराध्यसंराधकभावाभ्युपगमात्परेतरात्मनोरन्यत्वं स्यादिति । नेत्युच्यते—

## प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् ॥ २५ ॥

यथा प्रकाशाकाशसवितृप्रभृतयोऽङ्गुलिकरकोदकप्रभृतिषु कर्मसूपाधिभूतेषु सविशेषा इवावभासन्ते, नच स्वाभाविकीमविशेषात्मतां जहति, एवमुपाधिनिमित्त एवायमात्मभेदः स्वतस्त्वैकात्म्यमेव । तथाहि—वेदान्तेष्वभ्यासेनासकृज्जीवप्राज्ञयोरभेदः प्रतिपाद्यते ॥ २५ ॥

## अतोऽनन्तेन तथाहि लिङ्गम् ॥ २६ ॥

अतश्च स्वाभाविकत्वादभेदस्याविद्याकृतत्वाच्च भेदस्य विद्ययाऽविद्यां विधूय जीवः परेणानन्तेन प्राज्ञेनात्मनैकतां गच्छति । तथाहि लिङ्गम्— 'स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति' (मु० ३।२।९) 'ब्रह्मैव सन्ब्रह्माप्येति' (बृ० ४।४।६) इत्यादि ॥ २६ ॥

---

१ स्वयंभूरीश्वरः खानीन्द्रियाणि पराञ्चि अनात्मग्राहकाणि कृत्वा व्यतृणत् नाशितवान् । आवृत्तचक्षुर्निरुद्धेन्द्रियः । २ विनिद्रा वितमस्काः । युञ्जानः ध्यायिनः । योगलभ्य आत्मा योगात्मा ।

## उभयव्यपदेशात्त्वहिकुण्डलवत् २

तस्मि संराध्यसंराध भा न्तरमुपन्यस्यति म वि ये। क्वचिज्जीवप्राज्ञयो दो व्यपदिश्य 'ततर श्यते निष्ट ध्याय :' (मुण्ड० । ।८) ति ध्यातृध्यातव्यत न द्रष्टृद्रष्टव्यत्वेन च। 'रा-त्परं पुरुषमुपैति दिव्यम्' (मु० ।२।८) इति गन्तृगन व्यत्वेन। ': सर्वाणि भूतान्यन्तरो मयति' ति नि न्तृनियन्तव्यत न। चि तयोरेवाभेदो व्यपदिश ते 'त्त्वमसि' ( । ६।८।७) 'अहं ।स्मि' ( ० १।४। ०) 'एष आत । सर्वान्तरः' ( ० ३।४। ) 'ए आत्मान्त र्म्यमृतः' ( ० ३।७।३) इति। त्रैवमुभय० पदेशे यद्यभेद एवैकान्त तो गृह्य भेदव्यपदेशो निराल न ए ात्। अ उभयव्यपदेशदर्शनादहिकु डलवदत्र त्त्वं भवि मर्हति। य ाहिरि भेदः कुण्डलाभोगप्रांशुत्वादीनीति भेद एवमिहापीति ॥ २ ॥

## प्रकाशाश्रयवद्वा जस्त्वात् २८

अथवा प्रकाशाश्रयवदेतत्प्रतिपत्तव्यम्। । : ावित्रस्तदा-श्रयश्च सवि । नात्यन्तभि ावुभयोरपि जस्त्वाविशेषात् अथ च भेद-व्यपदेशभाजौ भव एवमिहापीति ॥ २८ ॥

## पूर्ववद्वा २९

य वा पूर्वमुपन्‍ प्रकाशादिवन्नावैशेष्यमिति थैवैतद्भवि म-ति। तथाह्यविद्याकृतत्वाद्बन्ध विद्यया मो उपपद्य । दि नः परमार्थत : कश्चिदात्माहिकुण्डलन्यायेन परस्यात्मनः संस्थान-भूतः प्रकाशाश्रयन्याये चैकदेशभूतो भ्युपगम्येत : ारमार्थि बन्‍ तिरस्कर्तुमशक्यत्वान्मोक्षशास्त्रवैयर्थ्यं प्रसज्येत, चा त्रोभावपि भेदाभेदौ श्रुतिस्तुल्यव दिशति। अभेदमेव हि तिपाद्यत न निर्दिशति भेदं पूर्वप्रसिद्धमेवानुवदत्यर्थान्तरविवक्षया। स्मात्प्रका ादि ावै-शेष्यमित्येष एव सिद्धान्तः ॥ २९ ॥

## प्रतिषेधाच्च ३

इतश्चैष सिद्धान्तः। यत्कारणं परस्मादात्मनोऽन् चेतनं षे-

धति शास्त्रम्—'नान्योऽतोऽस्ति द्रष्टा' ( बृ० ३।७।२३ ) इत्येवमादि । 'अथात आदेशो नेति नेति' (बृ० २।३।६) 'तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यम्' (बृ० २।५।१९ ) इति च ब्रह्मव्यतिरिक्तप्रपञ्चनिराकरणाद्ब्रह्ममात्रपरिशेषाच्चैष एव सिद्धान्त इति गम्यते ॥ ३० ॥

## ७ पराधिकरणम् । सू० ३१–३७

### परमतः सेतून्मानसंबन्धभेदव्यपदेशेभ्यः ॥ ३१ ॥

यदेतन्निरस्तसमस्तप्रपञ्चं ब्रह्म निर्धारितमस्मात्परमन्यत्तत्त्वमस्ति नास्तीति श्रुतिविप्रतिपत्तेः संशयः । कानिचिद्धि वाक्यान्यापातेनैव प्रतिभासमानानि ब्रह्मणोऽपि परमन्यत्तत्त्वं प्रतिपादयन्तीव । तेषां हि परिहारमभिधातुमयमुपक्रमः क्रियते । परमतो ब्रह्मणोऽन्यत्तत्त्वं भवितुमर्हति। कुतः—सेतुव्यपदेशादुन्मानव्यपदेशात्संबन्धव्यपदेशाद्भेदव्यपदेशाच्चेति । सेतुव्यपदेशस्तावत्—'अथ य आत्मा स सेतुर्विधृतिः' ( छा० ८।४।१ ) इत्यात्मशब्दाभिहितस्य ब्रह्मणः सेतुत्वं संकीर्तयति । सेतुशब्दश्च हि लोके जलसंतानविच्छेदकरे मृद्दार्वादिप्रचये प्रसिद्धः । इह तु सेतुशब्द आत्मनि प्रयुक्त इति लौकिकसेतोरिवात्मसेतोरन्यस्य वस्तुनोऽस्तित्वं गमयति । 'सेतुं तीर्त्वा' ( छा० ८।४।२ ) इति च तरतिशब्दप्रयोगात् । यथा लौकिकं सेतुं तीर्त्वा जाङ्गलमसेतुं[1] प्राप्नोत्येवमात्मानं सेतुं तीर्त्वाऽनात्मानमसेतुं प्राप्नोतीति गम्यते । उन्मानव्यपदेशश्च भवति 'तदेतद्ब्रह्म चतुष्पादष्टाशफं षोडशकलमि'ति । यच्च लोक उन्मितमेतावदिदमिति परिच्छिन्नं कार्षापणादि ततोऽन्यद्वस्त्वस्तीति प्रसिद्धम् । तथा ब्रह्मणोऽप्युन्मानात्ततोऽन्येन वस्तुना भवितव्यमिति गम्यते । तथा संबन्धव्यपदेशोऽपि भवति—'सता सोम्य तदा संपन्नो भवति' ( छा० ६।८।१ ) इति 'शारीर आत्मा' ( तै० २।३।१ ) 'प्राज्ञेनात्मना संपरिष्वक्तः' ( बृ० ४।३।२१ ) इति च । मितानां च मितेन संबन्धो दृष्टो यथा नराणां नगरेण । जीवानां च ब्रह्मणा संबन्धं व्यपदिशति सुषुप्तौ । अतस्ततः परमन्यदमितमस्तीति गम्यते । भेदव्यपदेशश्चैतमेवार्थं गमयति । तथाहि—

---

१ वातप्रचुरो देशो जाङ्गलः ।

'अथ य एषोऽन राादित्ये हिर यः पुरुषो दृश्य' ( छ ।६।६ ) इत्यादित्याधारमीश्वरं व्यपदिश्य तो भेदेनाक्ष्याधारमीश्वरं व पदिशति— 'अथ य एषोऽन्तरक्षिणि पुरु षो दृश्यते' ( छा १।७।५ ) ति । अतिदेशं चास्यामुना रूपादिषु करोति ' स्यैत तदे रूपं यदमुष्य रूपं यावमुष्य गेष्णौ तौ गेष्णौ य ाम त ाम' ( छा ।७।५ ) ति । ावधिकं चेश्वरत्व भयोर्व्यपदिशति 'ये चामुष्मात्पराञ्चो लोकास्तेषां चेष्टे देव ामानां ' ( छा० १।६।८ ) इत्येक । 'ये चैतस्मादर्वाञ्चो लोकास्तेषां चे नुष्यकामानां च' ( ा १।७।६ ) इत्ये । यथेदं मागध राज्यमिदं वैदेह ेति ॥ ३१ ॥

एवमेतेभ्यः ेत्वादिव्यपदेशेभ्यो ब्रह्मणः परमस्तीत्येवं प्राप्ते प्रतिपा ते—

**न्या ु ३२**

शब्देन प्रदर्शितां ाि निरुणद्धि । न ब्रह्मणोऽन्यत्किंचिद्भवि महेति प्रमाणाभावात् । नह्यन्यस्यास्तित्वे किंचित्प्रमाण पलभामहे । र्वस्य हि जनिमतो स्तुजात जन ादि ब्र णो भवतीति निर्धारितम् । अ न्यत्वं च कारणात्कार्य । नच ब्रह्मव्यतिरि किंचिदजं भवति ' देव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' (छा० ६।२।१) इत्यवधारणात् । एकविज्ञानेन च सर्वविज्ञानप्रति ानान्न ब्रह्मव्यतिरिक्तवस्त स्तित्वमवकल्पते । ननु सेत्वादिव्यपदेशा ब्रह्मव्यतिरिक्तं त्वं सूचयन्तीत्युक्तम् । नेत्युच्यते । सेतुव्यपदेशस्ताव णो बा सद्भावं प्रतिपादयितुं क्षमते । से रात्मेति ह्याह न ः परमस्तीति । तत्र परस्मिन्न ति सेत्वं नावकल्पत इति परं किमपि कल्प्ये । नचै ्या यं हठो प्रसिद्धकल्पना । अपिच सेतुव्यपदेशादात्मनो लौकि से निदर्शनेन सेतुबाह्यवस्तुतां प्र ञ्जयता मृद्दारुमयतापि प्रास येत । नचैत्याय्यम् । अजत्वादिश्रुतिविरोधात् । सेतुसामान्यात्तु सेतुशब्द आत्मनि प्रयुक्त इति श्लिष्यते । जगतस्तन्मर्यादानां च विधारकत्वं सेतुसामान्यमात्मनः । अतः सेतुरिव सेतुरिति प्रकृत आत्मा स्तूयते । सेतुं तीर्त्वेत्यपि रतेरति ासंभवात्प्राप्नोत्यर्थ एव र्ते । यथा व्याकरणं तीर्ण इति प्राप्त इत्युच्यते नातिक्रान्तस्तद्वत् ॥ ३२ ॥

## बुद्ध्यर्थः पादवत् ॥ ३३ ॥

यदप्युक्तमुन्मानव्यपदेशादस्ति परमिति, तत्राभिधीयते—उन्मानव्यपदेशोऽपि न ब्रह्मव्यतिरिक्तवस्त्वस्तित्वप्रतिपत्त्यर्थः । किमर्थस्तर्हि बुद्ध्यर्थः, उपासनार्थं इति यावत् । चतुष्पादष्टाशफं षोडशकलमित्येवंरूपा बुद्धिः कथं नु नाम ब्रह्मणि स्थिरा स्यादिति विकारद्वारेण ब्रह्मण उन्मानकल्पनैव क्रियते । नह्यविकारेऽनन्ते ब्रह्मणि सर्वैः पुंभिः शक्या बुद्धिः स्थापयितुं मन्दमध्यमोत्तमबुद्धित्वात्पुंसामिति । पादवत् । यथा मनआकाशयोरध्यात्ममधिदैवतं च ब्रह्मप्रतीकयोराम्नातयोश्चत्वारो वागादयो मनःसंबन्धिनः पादाः कल्प्यन्ते चत्वारश्चाग्न्यादय आकाशसंबन्धिनः आध्यानाय तद्वत् । अथवा पादवदिति यथा कार्षापणे पादविभागो व्यवहारप्राचुर्याय कल्प्यते । नहि सकलेनैव कार्षापणेन सर्वदा सर्वे जना व्यवहर्तुमीशते क्रयविक्रये परिमाणानियमात्तद्वदित्यर्थः ॥ ३३ ॥

## स्थानविशेषात्प्रकाशादिवत् ॥ ३४ ॥

इह सूत्रे द्वयोरपि संबन्धभेदव्यपदेशयोः परिहारो विधीयते । यदप्युक्तं संबन्धव्यपदेशाद्भेदव्यपदेशाच्च परमतः स्यादिति तदप्यसत् । यत एकस्यापि स्थानविशेषापेक्षयैतौ व्यपदेशावुपपद्यते । संबन्धव्यपदेशे तावदयमर्थः । बुद्ध्याद्युपाधिस्थानविशेषयोगादुद्भूतस्य विशेषविज्ञानस्योपाध्युपशमे य उपशमः स परमात्मना संबन्ध इत्युपाध्यपेक्षयैवोपचर्यते न परिमितत्वापेक्षया । तथा भेदव्यपदेशोऽपि ब्रह्मण उपाधिभेदापेक्षयोपचर्यते न स्वरूपभेदापेक्षया प्रकाशादिवदित्युपमोपादानम् । यथैकस्य प्रकाशस्य सौर्यस्य चान्द्रमसस्य वोपाधियोगादुपजातविशेषस्योपाध्युपशमात्संबन्धव्यपदेशो भवत्युपाधिभेदाच्च भेदव्यपदेशः । यथावा सूचीपाशाकाशादिषूपाध्यपेक्षयैवैतौ संबन्धभेदव्यपदेशौ भवतस्तद्वत् ॥ ३४ ॥

## उपपत्तेश्च ॥ ३५ ॥

उपपद्यते चात्रेदृश एव संबन्धो नान्यादृशः 'स्वमपीतो भवति' ( छा० ६।८।१ ) इति हि स्वरूपसंबन्धमेनमामनन्ति स्वरूपस्य चान-

---

१ ब्रह्मण उन्मानकल्पनं मन्दधियां ध्यानव्यवहाराय कार्षापणस्य पादव्यवहारवत् ।

देऽपि हि विद्यैकत्वे भवतीतरेतरविशेषणोपसंहारवद्गतिविशेषणानामप्युपसंहारः । विद्याभेदेऽपि तु गत्येकदेशप्रत्यभिज्ञानाद्गन्तव्याभेदाच्च गत्यभेद एव । तथाहि 'ते तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति' ( बृ० ६।२।१५ ) 'तस्मिन्वसन्ति शाश्वतीः समाः' ( बृ० ५।१०।१ ) 'सा या ब्रह्मणो जितिर्या व्युष्टिस्तां जितिं जयति तां व्युष्टिं व्यश्नुते' (कौषी० १।४ ) 'तद्य एवैतं ब्रह्मलोकं ब्रह्मचर्येणानुविन्दति' ( छा० ८।४।३ ) इति च तत्र तत्र तदेवैकं फलं ब्रह्मलोकप्राप्तिलक्षणं प्रदर्श्यते । यत्त्वेतैरेवेत्यवधारणमर्चिराद्याश्रयणे न स्यादिति । नैष दोषः । रश्मिप्राप्तिपरत्वादस्य । नह्येक एव शब्दो रश्मींश्च प्रापयितुमर्हत्यर्चिरादींश्च व्यावर्तयितुम् । तस्माद्रश्मिसंबन्ध एवायमवधार्यत इति द्रष्टव्यम् । त्वरावचनं त्वर्चिराद्यपेक्षायामपि गन्तव्यान्तरापेक्षया शैघ्र्यार्थत्वान्नोपरुध्यते । यथा निमिषमात्रेणात्रागम्यत इति । अपिच 'अथैतयोः पथोर्न कतरेणचन' ( छा० ५।१०।८ ) इति मार्गद्वयभ्रष्टानां कष्टं तृतीयं स्थानमाचक्षाणा पितृयाणव्यतिरिक्तमेकमेव देवयानमर्चिरादिपर्वाणं पन्थानं प्रथयति । भूयांस्यर्चिरादिसृतौ मार्गपर्वाण्यल्पीयांसि त्वन्यत्र । भूयसां चानुगुण्येनाल्पीयसां नयनं न्याय्यमित्यतोऽप्यर्चिरादिना तत्प्रथितेरित्युक्तम् ॥ १ ॥

## २ वाय्वधिकरणम् । सू० २

## वायुमब्दादविशेषविशेषाभ्याम् ॥ २ ॥

केन पुनः संनिवेशविशेषेण गतिविशेषणानामितरेतरविशेषणविशेष्यभाव इति तदेतत्सुहृद्भूत्वाचार्यो ग्रथयति । 'स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकम्' (कौ० १।३) इति कौषीतकिनां देवयानः पन्थाः पठ्यते । तत्रार्चिरग्निलोकशब्दौ तावदेकार्थौ ज्वलनवचनत्वादिति नात्र संनिवेशक्रमः कश्चिदन्वेष्यः । वायुस्त्वर्चिरादौ वर्त्मनि न श्रुतः कतमस्मिन् स्थाने निवेशयितव्य इति । उच्यते—'तेऽर्चिषमेवाभिसंभवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान्षडुदङ्ङेति मासांस्तान् मासेभ्यः

संवत्सरं 'वत्सरादादित्यम्' (छा० ५।१०।१,२) इत्यत्र संवत्सरात्परा-ञ्चमादित्यादर्वाञ्चं वायुमभिसंभवन्ति । कस्मात् । अविशेषविशेषाभ्याम्। तथाहि—'स वायुलोकम्' ( कौ० १।३ ) इत्यत्राविशेषोपदि स्य वायोः श्रुत्यन्तरे विशेषोपदेशो दृश्यते 'यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमा-गच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्ध्वमाक्रमते स आदित्यमागच्छति' ( ० ५।१०।१ ) इति । एतस्मादादित्या ायोः पूर्वत्वदर्शनाद्विशेषादब्दादित्ययोरन्तराले वायुर्निवेशयितव्यः । कस्मात्पु-नरग्नेः परत्वदर्शनाद्विशेषादर्चिषोऽनन्तरं वायुर्न निवेश्यते । नैषोऽस्ति विशेष इति वदामः । **ननू**दाहृता श्रुतिः 'स एतं देवयानं पन्थानमा-पद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकम्' ( कौषी० १।३ ) इति । उच्यते केवलोऽत्र पाठः पौर्वापर्येणावस्थितो नात्र क्रमवचनः कश्चिच्छब्दोऽस्ति । पदार्थोपदर्शनमात्रं त्र क्रियते एतमेतं चागच्छतीति इतरत्र पुनर्वायुप्रत्तेन रथचक्रमात्रेण च्छिद्रेणोर्ध्वमाक्रम्यादित्यमागच्छती-त्यवगम्यते मः। तस्मात्सूक्तमविशेषविशेषाभ्यामिति । वाजसनेयिनस्तु 'मासेभ्यो देवलोकं देवलोकादादित्यम्' ( बृ० ६।२।१५ ) इति समा-मनन्ति । त्रादित्यानन्तर्याय देवलोकाद्वायुमभिसंभवेयुः । वायुमब्दा-दिति तु छन्दोगश्रुत्यपेक्षयोक्तम् । छान्दोग्यवाजसनेयकयोस्त्वेकत्र देवलोको न विद्यते परत्र संवत्सरः । तत्र श्रुतिद्वयप्रत्ययादुभावप्युभयत्र ग्रथयितव्यौ । तत्रापि माससंबन्धात्संवत्सरः पूर्वः श्चिमो देवलोक इति विवेक्तव्यम् ॥ २ ॥

## ३ तडिदधिकरणम् । सू० ३

## डितोऽधि वरुणः संबन्धात् ३

'आदित्याच्चन्द्रमसं चन्द्रमसो विद्युतम्' (छा०४।१५।५) इत्यस्या विद्युत उपरि ात्स वरुणलो मित्ययं रुणः संबध्यते । अस्ति हि संबन्धो विद्यु-द्वरुणयोः । यदा हि विशाला विद्युतस्तीव्रस्तनितनिर्घोषा जीमूतोदरेषु प्रनृत्यन्त्यथापः पतन्ति । विद्योतते नयति वर्षिष्यति वा' ( छा० । ११।१ ) इति च । णम् । अपां चाधिपतिर्वरुण ति श्रुतिस्मृतिप्र-

सिद्धिः । वरुणादधीन्द्रप्रजापती स्थानान्तराभावात्पाठसामर्थ्याच्च । आगन्तुकत्वादपि वरुणादीनामन्त एव निवेशो वैशेषिकस्थानाभावाद्विद्युच्चान्त्यार्चिरादौ वर्त्मनि ॥ ३ ॥

## ४ आतिवाहिकाधिकरणम् । सू० ४–६

### आतिवाहिकास्तल्लिङ्गात् ॥ ४ ॥

तेष्वेवार्चिरादिषु संशयः—किमेतानि मार्गचिह्नान्युत भोगभूमयोऽथवा नेतारो गन्तॄणामिति । तत्र मार्गलक्षणभूता अर्चिरादय इति तावत्प्राप्तम् । तत्स्वरूपत्वादुपदेशस्य । यथाहि लोके कश्चिद्ग्रामं नगरं वा प्रतिष्ठासमानोऽनुशिष्यते गच्छेतस्त्वममुं गिरिं ततो न्यग्रोधं ततो नदीं ततो ग्रामं ततो नगरं वा प्राप्स्यसीत्येवमिहाप्यर्चिषोऽहरह्न आपूर्यमाणपक्षमित्याद्याह । अथवा भोगभूमय इति प्राप्तम् । तथाहि—लोकशब्देनाग्न्यादीननुबध्नाति 'अग्निलोकमागच्छति' ( कौषी० १।३ ) इत्यादि । लोकशब्दश्च प्राणिनां भोगायतनेषु भाष्यते—'मनुष्यलोकः पितृलोको देवलोकः' ( बृ० १।५।१६ ) इति च । तथाच ब्राह्मणम्—'अहोरात्रेषु ते लोकेषु सज्जन्ते' इत्यादि । तस्मान्नातिवाहिका अर्चिरादयः । अचेतनत्वादप्येतेषामातिवाहिकत्वानुपपत्तिः । चेतना हि लोके राजनियुक्ताः पुरुषा दुर्गेषु मार्गेष्वतिवाह्यानतिवाहयन्तीति । एवं प्राप्ते ब्रूमः—आतिवाहिका एवैते भवितुमर्हन्ति । कुतः—तल्लिङ्गात् । तथाहि 'चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एतान्ब्रह्म गमयति' ( छा० ४।१५।५ ) इति सिद्धवद्गमयितृत्वं दर्शयति । तद्वचनं तद्विषयमेवोपक्षीणमिति चेत् । न । प्राप्तमानवत्वनिवृत्तिपरत्वाद्विशेषणस्य । यद्यर्चिरादिषु पुरुषा गमयितारः प्राप्तास्ते च मानवास्ततो युक्तं तन्निवृत्त्यर्थं पुरुषविशेषणममानव इति ॥ ४ ॥

**ननु** तल्लिङ्गमात्रमगमकं न्यायाभावात् । नैष दोषः ।

### उभयव्यामोहात्तत्सिद्धेः ॥ ५ ॥

ये तावदर्चिरादिमार्गास्ते देहवियोगात्संपिण्डितकरणग्रामा इत्यस्वतन्त्रा अर्चिरादीनामप्यचेतनत्वादस्वातन्त्र्यमित्यतोऽर्चिराद्यभिमानिनश्चेतना देव-

ताविशेषा अतियात्रायां नियुक्ता इति गम्यते। लोकेऽपि हि मत्तमूर्च्छितादयः संपिण्डितकरणाः परप्रयुक्तवर्त्मानो भवन्ति। अनवस्थितत्वादप्यर्चिरादीनां न मार्गलक्षणत्वोपपत्तिः। नहि रात्रौ प्रेतस्याहःस्वरूपाभिसंभव उपपद्यते। नच प्रतिपालनमस्तीत्युक्तं पुरस्तात्। ध्रुवत्वात्तु देवतात्मनां नायं दोषो भवति। अर्चिरादिशब्दता चैषामर्चिराद्यभिमानादुपपद्यते 'अर्चिषोऽहः' ( छा० ४।१५।५,५।१०।१ ) इत्यादिनिर्देशस्त्वातिवाहिकत्वेऽपि न विरुध्यते अर्चिषा हेतुनाऽहरभिसंभवति। अह्ना हेतुना आपूर्यमाणपक्षमिति। तथाच लोके प्रसिद्धेष्वप्यातिवाहिकेष्वेवंजातीयक उपदेशो दृश्यते। गच्छ त्वमितो वलवर्माणं ततो जयसिंहं ततः कृष्णगुप्तमिति। अपि चोपक्रमे 'तेऽर्चिरभिसंभवन्ति' ( बृ० ६।२। ५ ) इति संबन्धमात्रमुक्तं न संबन्धविशेषः कश्चित्। उपसंहारे तु 'स एतान्ब्रह्म गमयति' ( छा० ४।१५।६ ) इति संबन्धविशेषोऽतिवाह्यातिवाहकत्वलक्षण उक्तस्तेन स एवोपक्रमेऽपीति निर्धार्यते। संपिण्डितकरणत्वादेव च गन्तॄणां न तत्रोपभोगसंभवः। लोकशब्दस्त्वनुपभुञ्जानेष्वपि गन्तृषु गमयितुं शक्यते। अन्येषां तल्लोकवासिनां भोगभूमित्वात्। अतोऽग्निस्वामिकं लोकं प्राप्तोऽग्निनाऽतिवाह्यते वायुस्वामिकं प्राप्तो वायुनेति योजयितव्यम्॥ ५॥

कथं पुनरातिवाहिकत्वपक्षे वरुणादिषु तत्संभवः। विद्युतो ह्यधि वरुणादय उपक्षिप्ता विद्युतस्त्वनन्तरमा ब्रह्मप्राप्तेरमानवस्यैव पुरुषस्य गमयितृत्वं श्रुतमिति। अत उत्तरं पठति

## वैद्युतेनैव ततस्तच्छ्रुतेः॥ ६॥

ततो विद्युदभिसंभवनादूर्ध्वं विद्युदनन्तरवर्तिनवामानवेन पुरुषेण वरुणलोकादिष्वतिवाह्यमाना ब्रह्मलोकं गच्छन्तीत्यवगन्तव्यम्। 'तान्वैद्युतात्पुरुषोऽमानवः स एत्य ब्रह्मलोकं गमयति' इति तस्यैव गमयितृत्वश्रुतेः वरुणादयस्तु तस्यैवाप्रतिबन्धकरणेन साहाय्यानुष्ठानेन केनचिदनुग्राहका इत्यवगन्तव्यम्। तस्मात्साधूक्तमातिवाहिका देवतात्मानोऽर्चिरादय इति॥ ६॥

## ५ र्योधिकरणम् सू० – ४

### कार्यं बादरिर गत्युपपत्तेः । ७ ।

' एनान्ब्रह्म गमयति' ( छा० ४।१५।५) इत्यत्र विचिकित्सते किं र्यमपरं गमयत्याहोस्वित्परमेवाविकृतं मुख्यं ह्मेति । कुतः संशयः । ब्रह्मशब्दप्रयोगाद्गतिश्रुतेश्च तत्र कार्यमे सगुणमपरं ब्रह्मैनान्गमयत्यमानवः पुरुष इति ादरिराचार्यो मन्यते । कुतः अ गत्युपपत्तेः । अ हि कार्यब्रह्मणो गन्व्यत्वमुपपद्यते प्रदेशवत्त्वात् । नतु परस्मिन्ब्रह्मणि गन्तृत्वं गन्तव्यत्वं गतिर्वाऽवकल्पते । र्वगतत्वात्प्रत्यगात्मत्वा गन्तॄणाम् ॥ ॥

### वि शेषितत्वा ॥ ८

'ब्रह्मलोकान्गमयति ते तेषु लोके पराः परावतो वसन्ति' ( ० ६।२।१५ ) इति च श्रुत्यन्तरे विशेषितत्वात र्ये ह्मविषयैव गतिरिति गम्यते । नहि बहुवचनेन विशेषणं परस्मिन्ब्रह्मण्यवकल्पते । कार्ये त्ववस्थाभेदोपपत्तेः संभवति बहुवचनम् । ोक तिरपि विकारगोचरायामेव संनिवेशविशिष्टायां भोगभूमावाञ्जसी । गौणी त न्यत्र 'ब्रह्मैव ोक एष सम्राट्' इत्यादिषु । अधिकरणाधि र्तव्यनिर्देशोऽपि परस्मिन्ब्रह्मण्यनाञ्जसः स्यात् । स्मात्कार्यविषयमेवेदं नयनम् ॥ ८ ॥

**ननु** र्यविषयेऽपि शब्दो नोपपद्यते समन ये हि समस्तस्य जगतो जन्मादि ारणं ेति स्थापितमिति । अत्रोच्यते

### मीप्य तद्व्यपदे : । ९

शब्द आशङ्काव्यावृत्त्यर्थः । परब्रह्मसामीप्यादपर ह्मणस्तस्मिपि ब्रह्मशब्दप्रयोगो न विरुध्यते । परमेव हि ह्म वि द्धोपाधिसंबन्धं क्वचित्कैश्चिद्वि कारधर्मैर्मनोमयत्वादिभिरुपासनायोपदिश्यमानमपरमिति स्थितिः ॥ ९ ॥

**ननु** कार्यप्राप्तावनावृत्तिश्च णं न घटते । नहि परस्माद्ब्रह्मणोऽन्यत्र क्वचिन्नि ां यनि । दर्शयति च देवयाने पथा प्रस्थि ानामना-

वृत्तिम् 'एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते' ( ।
१५।६ ) इति तेषामिह न पुनरावृत्तिरस्ति 'तयोर्ध्वमायन्नमृतत्वमेति'
( छा० ८।६।६, क० ६।१६, ) ति चेत् । अ ब्रूमः

## कार्यात्यये तदध्यक्षेण सहातः परमभिधा त् १

ार्यब्रह्मलोकप्रलयप्रत्युपस्थाने सति तत्रैगोत्प स यग्दर्शनाः सन्त-
स्तदध्यक्षेण हिर यगर्भेण सहातः परं परिशुद्धं विष्णोः रमं दं प्रतिप-
द्यन्त इति । इत्थं क्रममुक्तिरनावृत्त्यादि त्यभिधानेभ्योऽभ्युपगन व्या ।
नह्यञ्जसैव गतिपूर्विका परप्राप्तिः संभवतीत्युपपादितम् ॥ १ ॥

## ११

स्मृतिरप्येतमर्थमनुजानाति 'ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसं-
चरे । पर ान्ते कृतात्मानः प्रविशन्ति परं पदम्' इति । तस्मात्कार्य -
ह्मविषया गतिः श्रूयत इति सिद्धान्तः ॥ ११ ॥

कं पुनः पूर्वपक्षमाशङ्क्यायं सिद्धान्तः प्रति पि : 'कार्यं दरिः'
( ० सू० ।३।७ ) इत्यादिनेति । स इदानीं सूत्रैरेवोपदर्श्यते

## परं जैमि नि ख्यत त् १२

जैमिनिस्त्वाचार्यः 'स एनान्ब्रह्म गमयति' ( छा ४।१५।६ )
इत्यत्र परमेव ब्र प्रापयतीति मन्यते । कुतः मुख्यत्वात् । परं हि
ब्रह्मशब्दस्य मुख्यमालम्बनं, गौणमपरं, मुख्यगौणयोश्च मुख्ये संप्रत्ययो
भवति ॥ १२ ॥

## दर्शनाच्च १३

'तयोर्ध्वमायन्नमृतत्वमेति' ( छा० ८।६।६, क० ६।१६ ) ति च
गतिपूर्व म तत्वं दर्शयति । अमृतत्वं च परस्मिन्ब्रह्मण्युपपद्यते न ार्ये,
विनाशित्वात्कार्यस्य । 'अथ यत्रान्यत्पश्यति तदल्पं तन्मर्त्यम्' ( छा
।२४।१ ) इति प्रवचनात् । परविषयैव चैषा गतिः कठवल्लीषु पठ्यते ।
नहि त्र विद्यान्तरप्रक्रमोऽस्ति 'अन्यत्र धर्मादन्यत्राधर्मात्' (
२।१४ ) इति परस्यैव ब्रह्मणः प्रक्रान्त त्वात् ॥ १३ ॥

## नच यैं प्रतिपत्त्यभिसंधिः १४

अपिच 'प्रजापतेः सभां वेश्म प्रपद्ये' ( छा० ८।१४।१ ) इति नायं कार्यविषयः प्रतिपत्त्यभिसंधिः 'नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म' ( छा० ८।१४।१ ) इति कार्यविलक्षण परस्यैव ब्रह्मणः प्रकृतत्वात्। 'यशोऽहं वामि ब्रा णानाम्' ( छा० ८।१४।१ ) इति च सर्वात्मत्वेनोपक्रमणात्। 'न तस्य प्रतिमा अस्ति, य नाम महद्यशः' ( श्वेता० ४।१९ ) इति च परस्यै ब्रह्मणो यशोनामत्वप्रसिद्धेः । सा चेयं वेश्मप्रतिपत्तिर्गतिपूर्वि । हार्दविद्यायामुदिता दपराजिता पूर्ब्रह्मणः प्रभुविमितं हिरण्मयम्' (छा० ८।५।३) इत्यत्र । पदेरपि च गत्यर्थत्वान्मार्गापेक्षाऽवसीयते । स्मात्परत्र विषया गतिश्रुतय इति पक्षान्तरम्। तावेतौ द्वौ पक्षावाचार्येण सूत्रितौ गत्युपपत्त्यादिभिरेको मुख्यत्वादिभिरपरः । तत्र गत्युपपत्त्यादयः प्रभवन्ति मुख्यत्वादीनाभासयितुं नतु मुख्यत्वादयो गत्युपपत्त्यादीनित्याद्य एव सिद्धान्तो व्याख्यातो द्वितीयः पूर्वपक्षः । नह्यसत्यपि भवे मुख्यस्यैवार्थस्य ग्रहणमिति कश्चिदा पयिता विद्यते । परविद्याप्रकरणेऽपि च स्तुत्यर्थं विद्यान्तराश्रयगत्यनुकीर्तनमुपपद्यते 'विष्वङ्ङन्या उत्क्रमणे भवन्ति' ( ा० ८।६।६ ) इतिवत्। 'प्रजापतेः सभां वेश्म प्रपद्ये' ( छा ८।१४।१ ) इति तु पूर्ववाक्यविच्छेदेन कार्येऽपि प्रतिपत्त्यभिसंधिर्न विरुध्यते। सगुणेऽपि च ब्र णि सर्वात्मत्वसंकीर्तनं र्वकर्मा सर्वकाम इत्यादिवद् कल्पते। तस्मादपरविषया एव गतिश्रुतयः । चित्पुनः पूर्वाणि पूर्वपक्षसूत्राणि भवन्त्युत्तराणि सिद्धान्तसूत्राणीत्येतां व्यवस्थामनुरुध्यमानाः परविषया एव गतिश्रुतीः प्रति पयन्ति तदनुपपन्नं गन्तव्यत्वानुपपत्तेर्ब्रह्मणः। यत्सर्वगतं सर्वान् रं सर्वात्मकं च परं ब्रह्म 'आकाशवत्सर्वगतश्च नित्यः' 'यत्साक्षादपरोक्षाद्ब्रह्म' ( बृ० ३।४।१ ) 'य आत्मा र्वान्तरः' ( बृ० ३।४।१ ) 'आत्मैवेदं सर्वम्' ( ा० ।२५।२ ) ' वेदं विश्वमिदं रिष्ठम्' ( मु० २।२। ११ ) इत्यादिश्रुतिनिर्धारि विशेषं त गन्तव्यता न कदाचिदप्युपपद्यते । हि गतमेव गम्यते । अन्यो ह्यन्यद्गच्छतीति प्रसिद्धं लोके ।

**ननु** लोके ग स्यापि गन्तव्यता देशान्तरविशिष्टा दृष्टा । यथा पृथिवीस्थ एव पृथिवीं देशान्तर रेण गच्छतीति । तथानन्यत्वेऽपि बालस्य कालान्तरविशिष्टं वार्धकं स्वात्मभू मेव गन्तव्यं तद्वद्ब्रह्मणोऽपि सर्वशक्त्युपेतत्वात्कथंचिद्गन्तव्य । स्यादिति । न । प्रतिषिद्धसर्वविशेषत्वाद्ब्रह्मणः । 'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्' ( श्वेता ६।१९ ) 'अस्थूलमनण्वह्रस्वमदीर्घम्' ( बृ० ३।८।८ ) 'सबाह्याभ्यन्तरो ह्यजः' ( मु० २।१।२ ) 'स वा एष महानज आत्माऽजरोऽमरोऽमृतोऽभयो ' ( ० ४।४।२५ ) 'स एष नेति नेत्यात्मा' ( बृ० ३।९।२६ ) इत्यादि तिस्मृतिन्यायेभ्यो न देशकालादिविशेषयोगः परमात्मनि कल्पयितुं शक्यते । येन भूप्रदेशवयोवस्थान्यायेनास्य गन्तव्यता त् । भूवयोस्तु प्रदेशावस्थादिविशेषयोगादुपप ते देशकालविशिष्टा गन्तव्यता । जगदुत्पत्तिस्थितिप्रलयहेतुत्वश्रुतेरनेकशक्तित्वं ब्रह्मण इति चेत् । न । विशेषनिराकरणश्रुतीनामनन्यार्थत्वात् । उत्पत्त्यादिश्रुतीनामपि समानमनन्यार्थत्वमिति चेत् । न । तासामेकत्वप्रतिपादनपरत्वात् । मृदादिदृष्टान्तैर्हि सतो ब्रह्मण एक सत्यत्वं विकारस्य चानृतत्वं प्रतिपादयच्छास्त्रं नोत्पत्त्यादिपरं भवितुमर्हति । त्पुनरुत्पत्त्यादिश्रुतीनां विशेषत्वं न पुनरि रशेषत्वमितरासामिति । उच्यते विशेषनिराकरणश्रुतीनां निराकाङ्क्षार्थत्वात् । नह्यात्मन एकत्वनित्यत्वशुद्धत्वाद्यवगतौ सत्यां भूयः काचिदा ङ्क्षोपजायते पुरुषार्थसमाप्तिबु उपपत्तेः ' त्र को मोहः : शोक एकत्वमनुपश्यतः' (ईशा० ) 'अभयं वै जनक प्राप्तोऽसि' (बृ ४।२।४) 'विद्वान्न बिभेति कुतश्चन । एतं ह ाव न तपति किमहं साधु ाकरवं किमहं पापमकरवम्' ( तैत्ति० २।९।१ ) इत्यादिश्रुतिभ्यः । थैव च विदुषां तुष्ट्यनुभ ादिदर्शनात् । विकारानृताभिसंध्यपवादाच्च 'मृत्योः मृत्युमाप्नोति य इह नानेव पश्यति' इति । अतो न विशेषनिराकरणश्रुतीनामन्यशेषत्वमवगन्तुं क्यते । नैवमुत्पत्त्यादिश्रुतीनां निराकाङ्क्षार्थप्रतिपादर्थ्यमस्ति । प्रत्यक्षं सामन्यार्थत्वं समनुगम्यते । तथाहि 'तत्रैच्छुङ्गमुत्पतितं ोम्य विजानीहि नेदममूलं भविष्यति' ( ६।८।३)

इत्युपन्यस्योदर्के सत एवैकस्य जगन्मूलस्य विज्ञेयत्वं दर्शयति । 'यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद्ब्रह्मेति' ( तै०३।१।१) इति च । एवमुत्पत्त्यादिश्रुतीनामैकात्म्यावगमपरत्वान्नानेकशक्तियोगो ब्रह्मणः । अतश्च ग[illegible] व्यत्वानुपपत्तिः । 'न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन्ब्रह्माप्येति' (बृ० ४।४।६) इति च परस्मिन्ब्रह्मणि गतिं निवारयति । तद्व्याख्यातं 'स्प[illegible] केषाम्' ( [illegible] ० सू० ४।२।१३ ) इत्यत्र । गतिकल्पनायां च गन्ता जीवो गन्तव्यस्य ब्रह्मणोऽवयवो विकारो वान्यो वा ततः [illegible]त् । अत्यन्ततादात्म्ये गमनानुपपत्तेः । यद्येवं ततः किं स्यात्। उच्यते । यद्येकदेशस्तेनैकदेशिनो नित्यप्राप्तत्वान्न पुनर्ब्रह्मगमनमुपपद्यते। एकदेशित्वकल्पना च ब्रह्मण्यनुपपन्ना निरवयवत्वप्रसिद्धेः। विकारपक्षेऽप्येतत्तुल्यं विकारेणापि विकारिणो नित्यप्राप्तत्वात् । नहि घटो मृदात्मतां परित्यज्यावतिष्ठते परित्यागे वाऽभावप्राप्तेः। विकारावयवपक्षयोश्च तद्वतः स्थिरत्वाद्ब्रह्मणः संसारगमनमप्यनवक्लृप्तम् । अथान्य एव जीवो ब्रह्मणः । सोऽणुर्व्यापी मध्यमपरिमाणो वा भवितुमर्हति । व्यापित्वे गमनानुपपत्तिः । मध्यमपरिमाणत्वे चानित्यत्वप्रसङ्गः । अणुत्वे कृत्स्नशरीरवेदनानुपपत्तिः । प्रतिषिद्धे चाणुत्वमध्यमपरिमाणत्वे विस्तरेण पुरस्तात् । परस्माच्चान्यत्वे जीवस्य 'तत्त्वमसि' (छा० ६।८। ) इत्यादिशास्त्रबाधप्रसङ्गः । विकरावयवपक्षयोरपि समानोऽयं दोषः । विकारावयवयोस्तद्वतोऽनन्यत्वाददोष इति चेत् । न । मुख्यै[illegible]त्वानुपपत्तेः । सर्वेष्वेतेषु पक्षेष्वनिर्मोक्षप्रसङ्गः। संसार्यात्मत्वानिवृत्तेः । नि[illegible]त्तौ [illegible] स्वरूपनाशप्रसङ्गः । ब्रह्मात्मत्वानभ्युपगमाच्च । यत्तु कैश्चिज्जल्प्यते नित्यानि नैमित्तिकानि कर्माण्यनुष्ठीयन्ते प्रत्यवायानुत्पत्तये काम्यानि प्रतिषिद्धानि च परिह्रियन्ते स्वर्गनरकानवाप्तये सांप्रतदेहोपभोग्यानि च कर्मा[illegible]युपभोगेनैव क्षिप्यन्त इत्यतो वर्तमानदेहपातादूर्ध्वं देहान्तरप्रतिसंधानकारणाभावात्स्वरूपावस्थानलक्षणं कैवल्यं विनापि [illegible]ह्मात्मतयैवंवृत्तस्य सेत्स्यतीति । तदसत् । प्रमाणाभावात् । नह्येतच्छास्त्रेण केनचित्प्रतिपादितं मोक्षार्थीत्थं समाचरेदिति । स्वमनीषया त्वेतत्तार्कितं यस्मात्कर्मनिमित्तः संसारस्तस्मा-

न्निमित्ताभावान्न भविष्यतीति । नचैतत्तर्कयितुमपि शक्यते निमित्ताभा-
दुर्ज्ञानत्वात् । बहूनि हि कर्माणि जात्यन्तरसंचि ानीष्टानिष्टविपा-
कान्येकैक जन्तोः संभाव्यन्ते । तेषां विरुद्धफलानां युगपदुपभोगासं-
भवात्कानिचिल्लब्धाव राणीदं जन्म निर्मिमते कानिचित्तु देशकालनिमि-
त्तप्रतीक्षाण्यासत इत्यतस्तेषामवशिष्टानां सांप्रतेनोपभोगेन क्षपणासं ।
यथावर्णि चरि ापि वर्तमानदेहपाते देहान्तरनिमित्ताभावः शक्यते
निश्चेतुम् । कर्मशेषसद्भावसिद्धि 'तद्य इह रमणीयचरणास्ततः शेषेण'
इत्यादिश्रुतिस्मृतिभ्यः । स्यादेतत् । नित्यनैमित्तिकानि तेषां क्षेपकाणि
भविष्यन्तीति । तन्न । विरोधाभावात् । सति हि विरोधे क्षेप्यक्षेपकभावो
भवति । नच जन्मान्तरसंचितानां सुकृतानां नित्यनैमित्तिकैरस्ति विरोधः।
शुद्धिरूपत्वाविशेषात् । दुरितानां त्वशुद्धि रूपत्वात्सति विरोधे भवतु
क्षपणं नतु तावता देहान्तरनिमित्ताभावसिद्धिः । सुकृतनिमित्तत्वोपपत्तेः ।
दुश्चरितस्याप्यशेषक्षपणानवगमात् । नच नित्यनैमित्तिकानुष्ठानात्प्रत्यवा-
यानुत्पत्तिमात्रं न पुनः फलान्तरोत्पत्तिरिति प्रमाणमस्ति फलान्तर-
ाप्यनुनिष्पादिनः संभवात् । स्मरति ापस्तम्बः ' यथाम्रे फलार्थे
निमिते छायागन्धावनूत्पद्येते ए ं धर्मं चर्यमाणमर्था अनूत्पद्यन्ते'
इति । नचासति सम्यग्दर्शने र्वात्मना काम्य तिषिद्ध र्जनं जन्म-
प्रायणान्तराले केनचित्प्रतिज्ञातुं शक्यम् । सुनिपुणानामपि सूक्ष्मा-
पराधदर्शनात् । संशयितव्यं तु भ ति थापि निमित्ताभावस्य दुर्ज्ञा-
नत्वमेव । नचानभ्युपगम्यमाने ज्ञानगम्ये ात्मत्वे कर्तृ भोक्तृ -
स्वभावस्यात्मनः कैवल्यमाकाङ्क्षितुं शक्यम् । अग्न्यौष्ण्यवत्स्वभावस्याप-
रिहार्यत्वात् । स्यादेतत् । कर्तृत्वभोक्तृत्वकार्यमनर्थो तच्छक्तिस्तेन
शक्त्य स्थानेऽपि कार्यपरिहारादुपपन्नो मोक्ष इति । तच्च न । शक्ति-
सद्भा े कार्यप्रसवस्य दुर्निवारत्वात् । अथापि केवला शक्ति :कार्यमा-
रभतेऽनपेक्ष्यान्यानि निमित्तानि । अत एकाकिनी सा स्थितापि नापराध्य-
तीति । न । निमित्तानामपि शक्ति लक्षणेन संबन्धेन नित्यसंबद्धत ात् ।
तस्मात्कर्तृत्वभोक्तृत्वस्वभावे त्यात्मन्यसत्यां विद्यागम्यायां ात्मतायां

थंचन मोक्षं प्रत्या स्ति । श्रुतिश्च 'नान्यः पन्था विद्य ऽयनाय' ( श्वेता ३।८ ) इति ज्ञानादन्यं मोक्षमार्गं वारयति । परस्मादनन्यत्वेऽपि जीवस्य सर्वव्यवहारलोपप्रसङ्गः । प्रत्यक्षादिप्रमाणाप्रवृत्तेरिति चेत् । न । प्राक्प्रबोधात्स्वप्नव्यवहारवत्तदुपपत्तेः । श च 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति' ( ०२।४।१४;४।५।१५ ) इत्यादिनाऽप्रबुद्धवि ये प्रत्यक्षादिव्यवहारमुक्त्वा पुनः प्रबुद्धविषये 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' ( बृ० २।४।१४;४।५।१५ ) इत्यादिना तदभावं दर्शयति । तदेवं परब्रह्मविदो गन्तव्यादिवि ानस्य बाधितत्वान्न कथंचन गतिरुपपादयितुं शक्या । किंविषयाः नर्गतिश्रुतय इति । उच्यते सगुणविद्याविषया भविष्यन्ति । तथाहि कचित्पञ्चाग्निविद्यां प्रकृत्य गतिरुच्यते चित्पर्यङ्कविद्यां कचिद्वैश्वानरविद्याम् । यत्रापि ब्रह्म प्रकृत्य गतिरुच्यते यथा 'प्राणो कं खं ब्रह्म' ( ०४। ।५ ) ति 'अथ यदिदमस्मिन पुरे दहरं पुण्डरीकं वेश्म' ( छा० ८।१।१ ) इति च तत्रापि वामनीत्वादिभिः त्यकामादिभिश्च गुणैः सगुणस्यैवोपात्वात्संभवति गतिः । न कचित्परब्रह्मविषया गतिः श्राव्यते यथा गतिप्रतिषेधः श्रावितः 'न तस्य प्राणा उत्क्रामन्ति' (बृ० ४।४।६)इति।' - विदाप्नोति परम्' (तै० २।१।१) इत्यादिषु तु सत्यप्याप्नोतेर्गत्यर्थत्वे वर्णितेन न्यायेन देशान्तरप्राप्त्यसंभवात्स्वरूपप्रतिपत्तिरेवेयमविद्याध्यारोपितनामरूपप्रविलयापेक्षयाऽभिधीयते'ब्रह्मैव सन्ब्रह्माप्येति' (बृ०४।४।७)इत्यादि दिति द्रष्टव्यम्। अपिच परविषया गतिर्व्याख्यायमाना प्ररोचनाय वा स्यादनुचिन्तनाय वा । तत्र प्ररोच तावद्ब्रह्मविदो न गत्युक्त्या क्रियते । स्वसंवेद्येनैवाव्यवहितेन विद्यासमर्पितेन स्वास्थ्येन तत्सिद्धेः नच नित्यसिद्धनिःश्रेयसनिवेदन ासाध्यफल विज्ञान गत्यनुचिन्तने काचिदपेक्षोपपद्यते । तस्मादपरब्रह्मविषया गतिः । तत्र परापरब्रह्मविवेकान - धारणेनापरस्मिन्ब्रह्मणि वर्त । गतिश्रुतयः परस्मिन्नध्यारोप्यन्ते । किं ब्रह्मणी परमपरं चेति । ब 'एत त्यकाम परं चापरं च ब्रह्म यदोंकारः' ( प्र ५।२ ) इत्यादिदर्शनात् । किं पुनः परं किमपर-

मिति । उच्यते । यत्राविद्याकृतनामरूपादिविशेषप्रतिषेधादस्थूलादिशब्दै-र्ब्रह्मोपदिश्यते तत्परम् । तदेव यत्र नामरूपादिविशेषेण केनचिद्विशिष्ट-मुपासनायोपदिश्यते 'मनोमयः प्राणशरीरो भारूपः' ( छा० ३।१४।२ ) इत्यादिशब्दैस्तदपरम् । नन्वेवमद्वितीयश्रुतिरुपरुध्येत। न । अविद्याकृत-नामरूपोपाधिकतया परिहृतत्वात् । तस्य चापरब्रह्मोपासन तत्संनिधौ श्रूयमाणम् 'स यदि पितृलोककामो भवति' ( छा ८।२।१ ) इत्यादि जगदैश्वर्यलक्षणं संसारगोचरमेव फलं भवति । अनिवर्तितत्वादविद्यायाः। तस्य च देशविशेषावबद्धत्वात्तत्प्राप्त्यर्थं गमनमविरुद्धम् । सर्वगतत्वेऽपि चात्मन आकाशस्येव घटादिगमने बुद्ध्याद्युपाधिगमने गमनप्रसिद्धिरित्यवा-दिष्म 'तद्गुणसारत्वात्' ( ब्र० सू० २।३।२९ ) इत्यत्र । तस्मात् 'कार्यं बादरिः' ( ब्र० सू० ४।३।७ ) इत्येष एव स्थितः पक्षः । 'परं जैमिनिः' ( ब्र० सू० ४।३।१२ ) इति तु पक्षान्तरप्रतिभानमात्रप्रदर्शनं प्रज्ञावि-कासनायेति द्रष्टव्यम् ॥ १४ ॥

## ६ अप्रतीकालम्बनाधिकरणम् सू १५–१६

**अप्रतीकालम्बनान्नयतीति बादरायण उभयथाऽदोष त्त-त्क्रतुश्च । १५**

स्थितमेतत्कार्यविषया गतिर्न परविषयेति । इदमिदानीं संदि ते किं सर्वान्विकारालम्बनानविशेषेणैवामानवः पुरुषः प्रापयति ब्रह्मलोकमुत कांश्चिदेवेति । किं तावत्प्राप्तं सर्वेषामेवैषां विदुषामन्यत्र पर द्ब्रह्मणो गतिः स्यात् । तथाहि 'अनियमः सर्वासाम्—' ( ब्र० सू० ३।३।३ ) इत्यत्राविशेषेणैवैषां विद्यान्तरेष्ववतारितेति । एवं प्राप्ते प्रत्याह—अप्रती-ालम्बनानिति । प्रतीकालम्बनान्वर्जयित्वा सर्वानन्यान्विकाराल-म्बनान्नयति ब्रह्मलोकमिति बादरायण आचार्यो मन्यते । नह्येवमुभय-थाभावाभ्युपगमे कश्चिद्दोषोऽस्ति । अनियमन्याय प्रतीकव्यतिरिक्ते-ष्वप्युपासनेषूप त्तेः । तत्क्रतुश्चा गोभयथाभावस्य समर्थको हेतुर्द्र व्यः । गो हि : स ब्राह्ममैश्वर्यमासीदेदिति श्रि यते 'तं य । यथोपा-

सते तदेव भवति' इति श्रुतेः। नतु प्रतीकेषु ब्रह्मक्रतुत्वमस्ति प्रतीकप्रधानत्वादुपासनस्य। नन्वब्रह्मक्रतुरपि ब्रह्म गच्छतीति श्रूयते यथा पञ्चाग्निविद्यायाम् 'स एनान्ब्रह्म गमयति' ( छा ४।१५।५ ) इति भवतु यत्रैवमाहत्यवाद उपलभ्यते तदभावे त्वौत्सर्गिकेण तत्क्रतुन्यायेन ब्रह्मक्रतूनामेव तत्प्राप्तिर्नेतरेषामिति गम्यते ॥ १५ ॥

## विशेषं च दर्शयति ॥ १६ ॥

नामादिषु प्रतीकोपासनेषु पूर्वस्मात्पूर्वस्मात्फलविशेषमुत्तरस्मिन्नुत्तरस्मिन्नुपासने दर्शयति 'यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवति' ( १० ।१।५) 'वाग्वाव नाम्नो भूयसी' (छा० ।२।१) 'यावद्वाचो गतं तत्रास्य यथाकामचारो भवति' (छा० ७।२।२) 'मनो वाव वाचो भूयः' (छा० ७।३।१) इत्यादिना। स चायं फलविशेषः प्रतीकत त्वादुपासनानामुपपद्यते। ब्रह्मतन्त्रत्वे तु ब्र णोऽविशिष्टत्वात्कथं फलविशेषः ात्। तस्मान्न प्रतीकालम्बनानामितरैस्तुल्यफलत्वमिति ॥ १६ ॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यश्रीशंकरभगवत्पादकृतौ श्रीमच्छारीरकमीमांसाभाष्ये चतुर्थाध्यायस्य तृतीयः पादः ॥ ३ ॥

---

# चतुर्थेऽध्याये चतुर्थः पादः

अत्र पादे ब्रह्मप्राप्ति-ब्रह्मलोकस्थितिनिरूप म्]

## १ संपद्याविर्भावाधिकरणम् । सू० १-३

## 'पद्याविर्भा : स्वेनशब्दात् १

ए मेवैष संप्रसादोऽ च्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत इति श्रूयते। तत्र संशयः किं देवलोकाद्युपभोगस्थाष्विवागन्तुकेन केनचिद्विशेषेणाभिनिष्पद्यत आहोस्विदात्ममात्रेणेति। किं तावत्प्राप्तम्। स्थानान्तरेष्विवागन्तुकेन केनचिद्रूपेणाभिनिष्पत्तिः स्यात्। मोक्षस्यापि फलत्वप्रसिद्धेः। अभिनिष्पद्यत इति चोत्पत्तिपर्यायत्वात्। स्वरूपमात्रेण चेदभिनिष्पत्तिः पूर्वास्वप्यवस्था स्वरूपानपायाद्विभाव्ये ।

तस्माद्विशेषेण केनचिदभिनिष्पद्यत इति । एवं प्राप्ते ब्रूमः केवलेनैवात्मनाविर्भवति न धर्मान्तरेणेति । तः स्वेन रूपेणाभिनिष्पद्यत इति स्वशब्दात् । अन्यथा हि स्वशब्देनेति विशेषणमनवक्लृप्तं ात् । नन्वात्मीयाभिप्रायः स्वशब्दो भविष्यति । न । त ावचनीयत्वात् । येनैव हि केनचिद्रूपेणाभिनिष्पद्यते तस्यैवात्मीयत्वोपपत्तेः स्वेनेति विशेषणमनर्थकं ात् । आत्मवचनतायां र्थवत्केवलेनै ात्मरूपेणाभिनिष्पद्यते नागन्तुकेनापररूपेणापीति ॥ १ ॥

कः पुनर्विशेषः पूर्वास्ववस्थास्विह च स्वरूपानपायसाम्ये तीत्य आह

## क्तः प्रतिज्ञानात् । २

योऽत्राभिनिष्पद्यत इत्युक्तः स सर्वबन्धविनिर्मुक्तः शुद्धेनैवात्मनाऽवतिष्ठते । पूर्वत्र त्वन्धो भवत्यपि रोदितीव विनाशमेवापीतो भवतीति चावस्थात्रयकलुषितेनात्मनेत्ययं विशेषः । कथं पुनरवगम्यते मुक्तोऽयमिदानीं भवतीति प्रतिज्ञानादित्याह । था हि 'एतं त्वेव ते भूयोऽनुव्याख्यास्यामि' ( छा० ८।९।३,८।१०।४,८।११।३ ) इत्यवस्थात्रयदोषविहीनमात्मानं व्याख्येयत्वेन प्रतिज्ञाय 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृश :' (छा० ८।१२।१) इति चोपन्य ' `न रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः' ( छा० ८।१२।३ ) इति चोपसंहरति । तथाख्यायिकोपक्रमेऽपि 'य आत्माऽपहतपाप्मा' ( छा० ८।७।१ ) इत्यादि मुक्तात्मविषयमेव प्रतिज्ञानम् । फलत्वप्रसि द्धिरपि मोक्षस्य बन्धनिवृत्तिमात्रापेक्षा नापूर्वोपजननापेक्षा । यदप्यभिनिष्पद्यत इत्यु त्तिपर्यायत्वं तदपि पूर्व -स्थापेक्षं यथा रोगनिवृत्तावरोगोऽभिनिष्पद्यत इति तद्वत् । तस्माददोषः ॥२॥

## आत्मा रणात् ३

कथं पुनर्मुक्त इत्युच्यते यावता 'परं ज्योतिरुपसंपद्य' ( ८।१२।३ ) इति कार्यगोचरमेवैनं श्रा यति । ज्योतिःशब्दस्य भौतिके ज्योतिषि रूढत्वात् । नचानतिवृत्तो विकारविषयात्कश्चिन्मुक्तो भवितु -र्हति । विकारस्यार्तत्व सिद्धेरिति । नै दोषः । आत ज्योतिः

शब्देना`द्यते प्रकरणात् 'य आत्माऽपहतपाप्मा विजरो विमृत्युः' (छा० ८। ।१ ) इति हि प्रकृते परस्मिन्नात्मनि नाकस्माद्भौतिकं ज्योतिः शक्यं ग्रहीतुम् । प्रकृतहानाप्रकृतप्रक्रियाप्रसङ्गात् । ज्योतिःशब्दस्त्वात्मन्यपि दृश्य` 'देवा ज्योतिषां ज्योतिः' ( बृ० ४।४।१६ ) इति । 'प्रपञ्चितं चैतत्' ( ० सू० १।३।४० ) इत्यत्र ॥ ३ ॥

## २ अविभागेन दृष्टत्वाधिकरणम् । सू० ४

## अविभागेन दृ त्व त् । ४

परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते यः स किं परस्मादात्मनः पृथगेव भवत्युताविभागेनैवावतिष्ठत इति वीक्षायाम् 'स तत्र पर्येति' ( ८।१२।३ ) इत्यधिकरणाधिकर्तव्यनिर्देशात् 'ज्योतिरुपसंपद्य' (छा० ८।१२।३ ) इति च कर्तृकर्मनिर्देशाद्भेदेनैवावस्थानमिति यस्य मतिस्तं व्युत्पादयत्यविभक्त एव परेणात्मना मुक्तोऽवतिष्ठते । कुतः दृष्टत्वात् । थाहि 'तत्त्वमसि' ( । ६।८।७ ) 'अहं ब्र ास्मि' ( ० १। ४।१० ) 'यत्र नान्यत्पश्यति' ( ।० ७।२४।१ ) 'न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत्' ( बृ० ४।३।२३ ) इत्येवमादीनि वाक्यान्यविभागेनैव परमात्मानं दर्शयन्ति । यथादर्शनमेव च फलं युक्तं तत्क्रतुन्यायात् । 'यथोदकं शुद्धे शुद्ध ासिक्तं तादृगेव भवति । एवं मुनेर्विजानत आत्मा भवति गौतम' ( क० ४।१५ ) इति चैवमादीनि मुक्तस्वरूपनिरूपणपराणि वाक्यान्यविभागमेव दर्शयन्ति । नदीसमुद्रादिनिदर्शनानि च । भेदनिर्देशस्त्वभेदेऽप्युपचर्यते । स भगवः स्मिन्प्रतिष्ठित इति ` हिम्नि' ( छा० ।२४।१ ) इति 'आत्मरतिरात्मक्रीडः' (छा० ७।२५।२ ) ति चैवमादिदर्शनात् ॥ ४ ॥

## ३ ब्राह्माधिकरणम् । सू० ५–७

## ह्मेण जैमि निरुपन्य सादिभ्यः ५

स्थितमे तु 'स्वेन रूपेण' (छा० ८।३।४ ) इत्यत्रात्ममा रूपेणाभिनिष्पद्य` नागन्तुके ।पररूपेणेति । अधुना तद्विशे बुभुत्सायामभिधी-

यते स्वमस्य रूपं ाह्ममपहतपाप्मत्वादिसत्यसंकल्पत्वावसानं तथा सर्व- त्वं सर्वेश्वरत्वं च तेन स्वरूपेणाभिनिष्पद्यत इति जैमिनिराचार्यो मन्यते । कुतः उपन्यासादिभ्यस्तथात्वावगमात् । तथाहि 'य आत्माऽपहतपाप्मा' ( छा० ८।७।१ ) इत्यादिना 'सत्यकामः सत्यसं- कल्पः' ( छा० ८।७।१ ) इत्येवमन्तेनोपन्यासेनैवमात्मकतामात्मनो बोधयति । था 'स तत्र पर्येति ज न्क्रीडन्रममाणः' (छा० ८।१२।३) इत्यैश्वर्यरूपमावेदयति । 'तस्य सर्वेषु लोकेषु कामचारो भवति' ( छा० ।२५।२ ) इति च । 'सर्व ः सर्वेश्वरः' इत्यादिव्यपदेशाश्चैवमुपपन्ना विष्यन्तीति ॥ ५ ॥

## चितितन्मात्रेण दात त दित्यौडु ोमिः ॥ ६

यद्यप्यपहतपाप्मत्वादयोभेदेनैव धर्मा निर्दिश्यन्ते तथापि शब्दविक- ल्पजा एवैते । पाप्मादिनिवृत्तिमात्रं हि तत्र गम्यते । चैतन्यमे त्वस्या- त्मनः स्वरूपमिति तन्मात्रेण स्वरूपेणाभिनिष्पत्तिर्युक्ता । तथाच श्रुतिः 'एवं वा अरेऽयमात्मानन्तरोऽबाह्यः त्स्नः प्रज्ञानघन एव' ( बृ० ४। ५।१३ ) इत्येवंजातीयकाऽनुगृहीता भविष्यति । त्यकामत्वादयस्तु यद्यपि वस्तुस्वरूपेणैव धर्मा उच्यन्ते सत्याः कामा अस्येति । तथाप्युपा- धिसंबन्धाधीनत्वात्तेषां नचैतन्यवत्स्वरूपत्वसंभवः । अनेकाकारत्वप्रति- षेधात् । प्रतिषिद्धं हि ह्मणोऽनेकाकारत्वम् 'न स्थानतोऽपि पर ो- भयलिङ्गम्' ( ब्र० सू० ३।२।११ ) इत्यत्र । अतएव च जक्षणादिसं- कीर्तनमपि दुःखाभावमात्राभि ायं स्तुत्यर्थमात्मरतिरित्यादिवत् । नहि मुख्यान्येव रतिक्रीडामिथुनान्यात्मनि क्यन्ते वर्णयितुं द्वितीयविषय- त्वात्तेषाम् । तस्मान्निरस्ताशेषप्रपञ्चेन प्रस नाव्यपदेश्येन बोधात्मना- ऽभिनिष्पद्यत इत्यौडुलोमिराचार्यो मन्यते ॥ ६ ॥

## एवमप्युपन सात्पूर्वभ दविरोधं दरा : ७

एवमपि पार र्थिकचैतन्यमात्रस्वरूपाभ्युपग ऽपि व्य हारापेक्षया

details necessary

पूर्वस्याप्युपन्यासादिभ्योऽवगतस्य ब्राह्मस्यैश्वर्यरूपस्याप्रत्याख्यानादविरोधं बादरायण आचार्यो मन्यते ॥ ७ ॥

## ४ संकल्पाधिकरणम् । सू० ८–९

### संकल्पादेव तु तच्छ्रुतेः ॥ ८ ॥

हार्दविद्यायां श्रूयते—'स यदि पितृलोककामो भवति संकल्पादेवास्य पितरः समुत्तिष्ठन्ति' (छा० ८।२।१) इत्यादि । तत्र संशयः किं संकल्प एव केवलः पित्रादिसमुत्थाने हेतुरुत निमित्तान्तरसहित इति । तत्र सत्यपि संकल्पादेवेति श्रवणे लोकवन्निमित्तान्तरापेक्षता युक्ता । यथा लोकेऽस्मदादीनां संकल्पाद्गमनादिभ्यश्च हेतुभ्यः पित्रादिसंपत्तिर्भवत्येवं मुक्तस्यापि स्यात् । एवं दृष्टविपरीतं न कल्पितं भविष्यति । संकल्पादेवेति तु राज्ञ इव संकल्पितार्थसिद्धिकरीं साधनान्तरसामग्रीं सुलभामपेक्ष्योच्यते । नच संकल्पमात्रसमुत्थानाः पित्रादयो मनोरथविजृम्भितवच्चलत्वात्पुष्कलं भोगं समर्पयितुं पर्याप्ताः स्युरिति । एवं प्राप्ते ब्रूमः संकल्पादेव तु केवलात्पित्रादिसमुत्थानमिति । कुतः—तच्छ्रुतेः । 'संकल्पादेवास्य पितरः समुत्तिष्ठन्ति' ( छा० ८।२।१ ) इत्यादिका हि श्रुतिर्निमित्तान्तरापेक्षायां पीड्येत । निमित्तान्तरमपि तु यदि संकल्पानुविधाय्येव स्याद्भवतु नतु प्रयत्नान्तरसंपाद्यं निमित्तान्तरमितीष्यते । प्राक्तत्संपत्तेर्वन्ध्यसंकल्पत्वप्रसङ्गात् । नच श्रुत्यवगम्येऽर्थे लोकवदिति सामान्यतोदृष्टं क्रमते । संकल्पबलादेव चैषां यावत्प्रयोजनं स्थैर्योपपत्तिः । प्राकृतसंकल्पविलक्षणत्वान्मुक्तसंकल्पस्य ॥ ८ ॥

### अत एव चानन्याधिपतिः ॥ ९ ॥

अतएव चावन्ध्यसंकल्पत्वादनन्याधिपतिर्विद्वान्भवति नास्यान्योऽधिपतिर्भवतीत्यर्थः । नहि प्राकृतोऽपि संकल्पयन्ननन्यस्वामिकत्वमात्मनः सत्यां गतौ संकल्पयति । श्रुतिश्चैतद्दर्शयति—अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामांस्तेषां सर्वेषु लोकेषु कामचारो भवति' ( छा० ८।१।६ ) इति ॥ ९ ॥

## ५ अभावाधिकरणम् । सू० १०– ४

### अभा ँ बादरिराह ह्येवम् १

'संकल्पादेवास्य पितरः समुत्तिष्ठन्ति' ( छा० ८।२।१ ) त्यादि श्रुतेर्मनस्तावत्संकल्पसाधनं सिद्धम् । शरीरेन्द्रियाणि पुनः प्राप्तैश्वर्य विदुषः सन्ति न वा सन्तीति मीक्ष्यते । तत्र दरिस्तावदाचार्यः शरीरस्येन्द्रियाणां चाभावं महीयमानस्य विदुषो मन्यते । कस्मात् । एवं हा यः 'मनसैतान्कामान्पश्यन्रम ' ( छा० ८।१२।५ ) 'य एते ब्रह्मलोके' ( छा० ८।१३।१ ) इति । यदि मनसा शरीरेन्द्रियैश्च विहरेन्मनसेति वि षणं न स्यात्। तस्मादभावः शरीरेन्द्रियाणां मोक्षे॥१०।

### जैमिनिर्वि कल्पामननात् ११

जैमिनिस्त्वाचार्यो मनोवच्छरीरस्यापि सेन्द्रिय भावं मुक्तं प्रति मन्यते । यतः 'स एकधा भवति त्रिधा भवति' ( छा० ७।२६।२ ) इत्यादिनाऽनेकधाभावविकल्पमामनन्ति । न कविधता विना शरीर-भेदेनाञ्जसी त् । यद्यपि निर्गुणायां भूमविद्यायामयमनेकधाभाववि- ल्पः प ते तथापि विद्यमानमेवेदं गुणावस्थायामैश्वर्यं भूमविद्या-स्तुतये संकीर्त्यत इत्यतः सगुणविद्याफलभावेनोपतिष्ठत इति ॥ ११ ॥

उच्यते

### द्वादशाहवदुभयविधं ादरायणोऽतः १२

बादरायणः पुनराचार्योऽत एवोभयलिङ्गश्रुतिदर्शनादुभयविधत्वं धु मन्यते यदा सशरीरतां संकल्पयति दा सशरीरो भवति यदा त्वशरीरतां तदाऽशरीर इति । सत्यसंकल्पत्वात्। संकल्पवैचित्र्याच्च । द्वादशाहवत् । यथा द्वादशाहःसत्रमहीनश्च भवति । उभयलिङ्गश्रुतिदर्शनादेवमिदम पीति ॥ १२ ॥

### तन्वभावे ध्यवदुपपत्तेः १३

यदा तनोः सेन्द्रियस्य शरीर । वस्तदा यथा संध्ये स्थाने शरीरे-न्द्रियविषयेष्वविद्यमानेष्वप्युपलब्धिमात्रा एव पित्रादिकामा भवन्त्ये मोक्षेऽपि स्युरेवं ह्येतदुपपद्यते ॥ १३ ॥

**भावे जाग्रद्वत् १४**

भावे पुनस्तनोर्यथा जागरिते विद्यमाना एव पित्रादिकामा भवन्त्येवं मुक्तस्याप्युपपद्यते ॥ १४ ॥

**६ प्रदीपाधिकरणम् । सू० १५–१६**

**प्रदीपवदावेश था हि दर्शयति । १५ ।**

भावं 'जैमिनिर्विकल्पामननात्' ( ब्र० सू० ४।४।११ ) इत्यत्र - रीरत्वं मुक्तस्योक्तम् । तत्र त्रिधाभावादिष्वनेकशरीरसर्गे किं निरात्मकानि रीराणि दारुय णीव सृज्यन्ते किंवा सात्मकान्यस्मदादिशरीरवदिति भवति वीक्षा । तत्र चात्ममनसोर्भेदानुपपत्तेरेकेन शरीरेण योगादितराणि शरीराणि निरात्मकानीति । एवं प्राप्ते प्रतिपद्यते प्रदीपवदावेश इति । यथा प्रदीप एकोऽनेकप्रदीपभावमापद्यते विकारशक्तियोगात् । एवमेकोऽपि सन्विद्वानैश्वर्ययोगादनेकभावमापद्य सर्वाणि शरीराण्याविशति । कुतः, तथाहि दर्शयति शा मेक नेकभावम् 'स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा नवधा' ( छा ।२६।२ ) इत्यादि । नैतद्दारुय- न्त्रोपमाभ्युपगमेऽव ल्पते नापि जीवान्तरावेशे । नच निरात्मकानां रीराणां प्रवृत्तिः सं वति । यत्त्वात्ममनसोर्भेदानुपपत्तेरनेकशरीरयो- गासंभव इति । नै दोषः । एकमनोनुवर्तीनि स नस्कान्येवापराणि शरीराणि सत्यसंकल्पत्वात्स्रक्ष्यति । षु च तेषूपाधिभेदादात्मनोऽपि भेदेनाधिष्ठातृत्वं योक्ष्यते । एषैव च योगशास्त्रेषु योगिनामनेकशरीरप्रयो- गप्रक्रिया ॥ १५ ॥

कथं पुनर्मुक्तस्यानेकशरीरावेशादिलक्षणमैश्वर्यमभ्युगम्यते ावता 'त- त्केन कं विजानीयात्' ( ० ४।५।१५ ) 'न तु तद्द्वितीयमस्ति त ोऽन्य- द्विभ यद्विजानीयात्' ( बृ० ४।३।३० ) 'सलिल एको द्र ऽद्वैतो ति' ( बृ०४।३।३२ ) इति चै जातीयका श्रुतिर्विशेषविज्ञानं वारय- ती उत्तरं पठति

**प्ययसं र ोरन्यतरापे ाविष्कृतं हि १६**

प्ययः प्रम् ' मपीतो भ ति स्मादेनं पितीत्याचक्ष'

( १० ६।८।१ ) इति श्रुतेः । संपत्तिः कैवल्यम्, 'ब्रह्मैव सन्ब्रह्माप्येति' ( बृ० ४।४।६ ) इति श्रुतेः । तयोरन्यतरामवस्थामपेक्ष्यैतद्विशेषसंज्ञाभाववचनम् । चित्सुषुप्तावस्थामपेक्ष्योच्यते चित्कैवल्यावस्थाम् । कथमवगम्यते यतस्तत्रैवैतदधिकारवशादाविष्कृतम् 'एतेभ्यो भूतेभ्यः समुत्थाय न्येवानु विनश्यति न प्रेत्य ज्ञाऽस्तीति' ( बृ० २।४।१४ ) 'यत्र त्वस्य सर्वमात्मैवाभूत्' ( बृ० २।४।१४ ) 'यत्र सुप्तो न कंचन कामं कामयते न कंचन स्वप्नं पश्यति' ( बृ० ४।३।१९। मा डू० ५ ) इत्यादिश्रुतिभ्यः । सगुणविद्याविपाकावस्थानं त्वेतत्स्वर्गादिवदवस्थान्तरं यत्रैतदैश्वर्यमुपवर्ण्यते । तस्माददोषः ॥ १६ ॥

## ७ जगद्व्यापाराधिकरणम् । सू० १ –२२

### जगद्व्यापारवर्जं प्रकरणादसंनिहितत ॥ १७ ।

ये सगुणब्रह्मोपासनात्सहैव मनसेश्वरसायुज्यं व्रजन्ति किं तेषां निरवग्रहमैश्वर्यं भवत्याहोस्वित्सावग्रहमिति संशयः । किं ता त्प्राप्तम् । निरङ्कुशमेवैषामैश्वर्यं भवितुमर्हति 'आप्नोति स्वाराज्यम्' ( तै० १।६।२ ) 'सर्वेऽस्मै देवा बलिमावहन्ति' ( तै० १।५।३ ) 'तेषां सर्वेषु लोकेषु कामचारो भवति' ( १० ७।२५।२,८।१।६ ) इत्यादिश्रुतिभ्य इति । एवं प्राप्ते पठति जगद्व्यापारवर्जमिति । जगदुत्पत्त्यादिव्यापारं वर्जयित्वाऽन्यदणिमाद्यात्मकमैश्वर्यं मुक्तानां भवितुमर्हति जगद्व्यापारस्तु नित्यसिद्धस्यैवेश्वरस्य । तः तस्य त्र प्र त्वादसंनिहितत्वा तरेषाम् । परएव हीश्वरो जगद्व्यापारेऽधिकृतः । तमेव प्रकृत्योत्पत्त्याद्युपदेशात् । नित्यशब्दनिबन्धनत्वा । तदन्वेषणविजिज्ञासनपूर्वकं त्वितरे ।-मणिमाद्यैश्वर्यं श्रूयते । तेनासंनिहितास्ते जगद्व्यापारे । समनस्कत्वादेव चैतेषामनैकमत्ये कस्यचित्स्थित्यभिप्रायः चित्संहाराभिप्राय इत्येवं विरोधोऽपि कदाचित त् । अथ चित कल्पमन्वन्य कल्प इत्यविरोधः समर्थ्येत ततः परमेश्वराकूतत त्वमेवेतरेषामिति व्य तिष्ठते॥ १७॥

### प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डल ोक्तेः ८

अथ यदुक्तम् 'आप्नोति स्वाराज्यम्' ( तै १।६।२ ) इत्यादिप्रत्य-

God appoints others as lords of the spheres and rulers

श्चोपदेशान्निरवग्रहमैश्वर्यं विदुषां न्याय्यमिति तत्परिहर्तव्यम् । अत्रो-च्यते । नायं दोषः । आधिकारिकमण्डलस्थोक्तेः । आधिकारिको यः सवितृमण्डलादिषु विशेषायतनेष्ववस्थितः पर ईश्वरस्तदायत्तैवेयं स्वाराज्यप्राप्तिरुच्यते । यत्कारणमनन्तरम् 'आप्नोति मनसस्पतिम्' ( तै० १।६।२ ) इत्याह । यो हि सर्वमनसां पतिः पूर्वसिद्ध ईश्वरस्तं प्राप्नोतीत्येतदुक्तं भवति । तदनुसारेणैव चानन्तरम् 'वाक्पतिश्चक्षुष्पतिः श्रोत्रपतिर्विज्ञानपतिश्च भवति' ( तै० १।६।२ ) इत्याह । एवमन्यत्रापि यथासंभवं नित्यसिद्धेश्वरायत्तमेवेतरेषामैश्वर्यं योजयितव्यम् ॥ १८ ॥

**विकारावर्ति च तथाहि स्थितिमाह ॥ १९ ॥**

विकारावर्त्यपि च नित्यमुक्तं पारमेश्वरं रूपं न केवलं विकारमात्रगोचरं सवितृमण्डलाद्यधिष्ठानम् । तथाह्यस्य द्विरूपां स्थितिमाह । यः 'तावानस्य महिमा ततो ज्यायांश्च पुरुषः । पादोऽस्य सर्वा भूतानि, त्रिपादस्यामृतं दिवि' (छा० ३।१२।६) इत्येवमादिः । नच तन्निर्विकारं रूपमितरालम्बनाः प्राप्नुवन्तीति शक्यं वक्तुमतत्क्रतुत्वात्तेषाम् । अतश्च यथैव द्विरूपे परमेश्वरे निर्गुणं रूपमनवाप्य सगुण एवावतिष्ठन्त एवं सगुणेऽपि निरवग्रहमैश्वर्यमनवाप्य सावग्रह एवावतिष्ठन्त इति द्रष्टव्यम् ॥ १९ ॥

**दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ २० ॥**

दर्शयतश्च विकारावर्तित्वं परस्य ज्योतिषः श्रुतिस्मृती । 'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः' ( कठ० ५।१५। श्वेता० ६।१४। मुण्ड० २।२।१० ) इति । 'न तद्भासयते सूर्यो न शशाङ्को न पावकः' ( गी० १५।६ ) इति च तदेवं विकारावर्तित्वं परस्य ज्योतिषः प्रसिद्धमित्यभिप्रायः ॥ २० ॥

**भोगमात्रसाम्यलिङ्गाच्च ॥ २१ ॥**

इतश्च न निरङ्कुशं विकारालम्बनानामैश्वर्यं यस्माद्भोगमात्रमेवैषामनादिसिद्धेनेश्वरेण समानमिति श्रूयते 'तमाहापो वै खलु मीयन्ते लोकोऽसौ' इति 'स यथैतां देवतां सर्वाणि भूतान्यवन्त्येवं हैवंविदं

सर्वाणि भूतान्यवन्ति तेनो एतस्यै देवतायै सायुज्यं सलो तां जयति' ( बृ० १।५।२३ ) इत्यादिभेदव्यपदेशलिङ्गेभ्यः ॥ २१ ॥

नन्वेवं सति सातिशयत्वादन्तवत्त्वमैश्वर्यस्य त्ततश्चैषामावृत्तिः प्रसज्येतेत्य त्तरं भगवान्बादरायण आचार्यः पठति

## अ वृत्तिः शब्दादनावृत्तिः शब्दात् । २२ ।

नाडीरश्मिसमन्वितेनार्चिरादिपर्वणा देवयानेन पथा ये ब्रह्मलोकं शास्त्रोक्तविशेषणं गच्छन्ति यस्मि रश्च ह वै यश्चार्णवौ ब्रह्मलोके तृतीयस्यामि ो दिवि यस्मि रं मदीयं सरो यस्मि श्वत्थः सोमसवनो यस्मि पराजि । पूर्ब्र णो यस्मिंश्च प्रभुविमितं हिर मयं वेश्म यश्चानेकधा म र्थवादादिप्रदेशे प्रपञ्च्यते ते तं प्राप्य न चन्द्रलोकादिव भुक्तभोगा आवर्तन्ते । कुतः । 'तयोर्ध्वमाय मृतत्वमेति' ( छा० ८।६।६, कठ० ६।१६ ) 'तेषां न पुनरावृत्तिः' ( बृ० ६।२।१५ ) 'एतेन प्रतिप माना इमं मानवमावर्तं नावर्तन्ते' ( छा० ४।१५।६ ) 'ब्रह्मलोकमभिसंपद्यते' ( छा० ८।१५।१ ) 'न च पुनरावर्तते' ( छा० ८।१५।१ ) इत्यादि ब्देभ्यः । अन्तवत्त्वेऽपि त्वैश्वर्यस्य यथाऽनावृत्तिस्त वर्णितम् 'कार्यात्यये तदध्यक्षेण हातःपरम्' ( ब्र० सू० ४।३।१० ) इत्यत्र । यग्दर्शनविध्वस्ततमसां तु नित्यसिद्धनि णपरायणानां सि वानावृत्तिः तदाश्रयणेनैव हि सगुणशरणानामप्यनावृत्तिसिद्धि रिति । अनावृत्तिः शब्दादनावृत्तिः शब्दादिति सूत्राभ्यासः शा परिसमाप्तिं द्योतयति ॥ २२ ॥ इति श्रीमच्छारीरकमीमांसाभाष्ये श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्गोविन्दभगवत्पूज्यपादशिष्यश्री च्छंकरभगवत्पूज्यपाद तौ चतुर्थाध्याय चतुर्थः पादः ॥ ४ ॥

## समाप्त मिदं सूत्रशाङ्करभाष्यम्

# बादरायणप्रणीतब्रह्मसूत्राणां वर्णानुक्रमः ।

## बादरायणप्रणीतब्रह्मसूत्राणां वर्णानुक्रमः

बादरायणप्रणी ब्रह्मसूत्राणां वर्णक्र सूची ।